C. 12. 3213
B. 12. 85. 20
K. 12. 85. 20

अपराधानुरूपं च दण्डं पापेषु पातयेत् ।
उद्वेजयेद्धनैर्ऋद्धान्दरिद्रान्वधबन्धनैः ॥ १९
विनयैरपि दुर्वृत्तान्प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ २०
राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् ।
आजीवकस्य स्तेनस्य वर्णसंकरकस्य च ॥ २१
सम्यक्प्रणयतो दण्डं भूमिपस्य विशां पते ।
युक्तस्य वा नास्त्यधर्मो धर्म एवेह शाश्वतः ॥ २२
कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमाप्नुयात् ॥ २३

न परस्य श्रवादेव परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयेत वा ॥ २४
न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि ।
दूतस्य हन्ता निरयमाविशेत्सचिवैः सह ॥ २५
यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ २६
कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान्दूतः स्यात्सप्तभिर्गुणैः ॥ २७
एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता ।
शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥ २८

---

°क्ष्यंते; M2 °क्ष्यं तं; M4 °क्षंत.

19 G2 om. $19^{ab}$ (cf. v. l. 18). — $^{a}$) D7 S (G2 om.) तु (for च). — $^{b}$) D6 दंड-. K5 पापे तु (for पापेषु). K3 V1 B2 Da Dn D4. 6–8 S (G2 om.) धारयेत्; K5 Bo. 3–5 D2. 3. 5 कारयेत्. — K2. 4 om. (hapl.) $19^{c}$–$20^{d}$, while V1 reads it on marg. — $^{c}$) K1 नियोजयेद्; K3. 5 V1 B (B1 missing) D (D1 missing) S वियोजयेद् (G1 °जने) (for उद्वेजयेद्). K1 नृद्धां (sic); K3 D2–4 ऋद्धान्; B2 G1 लब्धान्; B3 वृद्धान्; D5 इद्धान्; D7 T G2–4 M1–3 लुब्धान्; Ca ऋद्धान् (as in text). — $^{d}$) K1 दरिद्रं; K3 V1 B2. 4. 5 Da Dn D6 अधनान् (for दरिद्रान्). K3. 5 V1 B (B1 missing) D (except D4. 7; D1 missing) अथ; G1 वाथ; G2 पद-; M2 धन- (for वध-). Da बंधयेत् (for -बन्धनैः).

20 K2. 4 om. 20 (cf. v. l. 19). V1 reads 20 on marg. — $^{a}$) K3 V1 B (B1 missing) D (D1 missing) S विनयेच्चा(D6 G2 °नये चा)पि दुर्वृत्तान्. — $^{b}$) D4 प्रहारैंद्रपि (sic). B2. 5 D7 T1 G3. 4 पार्थिव (B5 °वाः; G3 °वान्); M भूमिपः. — $^{d}$) D4 शिष्टाश्च; T2 विशिष्टान्.

21 K5 om. $21^{ab}$. — $^{a}$) D4 वधे; G4 पथं (for वधं). Da चिकीर्षेयुस्; G3 °र्षेभ्यश्. — $^{b}$) D7 S चित्रस्त(M4 om. स्त)स्य (by transp.). — $^{c}$) K2. 3 D4. 7 T G आजीविकस्य; K5 V1 B (B1 missing) Da Dn D2. 3. 5. 6. 8 Ca. v आदीप(D8 °पि)कस्य. — $^{d}$) K4 -शंकरकस्य; K5 V1 B (B1 missing) Dn1 D2–6. 8 -संकरि°. B2 वा (for च).

22 $^{a}$) Ś1 K1. 4 सम्यक्प्रणयि(K4 °क्प्राणय)तो दंडो. — $^{c}$) D4 विनास्ति (for वा नास्ति). G3 धर्मो (for [अ]धर्मो). — $^{d}$) K3 V1 B2 Da Dn D4. 6–8 T G एव हि (for एवेह).

23 $^{a}$) G1 कर्मकारेण; M2 कामकारक-; Ca °कारेण (as in text). — $^{b}$) D4 यत् (for यः). M4 कायाद् (for कुर्याद्). — $^{c}$) K4 सहसा (for स इह). D4 -संयुक्ता. — $^{d}$) D4 मृता. Dn D6 इच्छति; D7 S अश्नुते (for आप्नुयात्).

24 Cf. Hitopadeśa II. 130. — $^{a}$) K1 (marg. as in text) D4 प्रवादे च; K3. 5 Bo. 3–5 Dn D2. 3. 5. 6. 8 T2 G2. 4 प्रवादेन; D7 T1 G3 [अ]पराधेन (for श्रवादेव). Ca cites परस्य श्रवात् (as in text). — $^{b}$) K4 दंडमर्षयेत्; B2 Da °पातनं; D2 °सर्पयत्. — $^{c}$) G4 आगमानागमं (for °नुगमं). Cv as in text. — $^{d}$) Ś1 बध्नीयुर् (for बध्नीयान्). K2. 5 V1 B2. 3 Da Dn D2. 6 मोक्षयीत वा; K4 D8 मोक्षये तदा (D8 तव); D7 S मोचयी(G2 M °ये)त वा.

25 $^{a}$) K4 हन्यां; D6 हर्म्यान्; G1 ह्यन्या (for हन्यान्). — $^{c}$) D3. 5 निरयान् (for °यम्).

26 $^{a}$) D7 T G [उ]क्तवचनं (for °वादिनं). — $^{b}$) D2. 3 क्षात्र- (for क्षत्र-). — $^{d}$) D4 ब्रह्महत्याम् (for भ्रूण°).

27 $^{a}$) Dn D6. 8 कुल- (for शील-). — V1 reads $27^{b}$–$30^{a}$ on marg. — $^{b}$) D4 वाज्ञी. — $^{c}$) D2; 3. 5 द्युतिमान् (for स्मृति°). — T2 G1 om. (hapl.) $27^{d}$–$29^{c}$.

28 T2 G1 om. 28 (cf. v. l. 27). V1 reads 28 on marg. — $^{a}$) B2 Da2 एभिर् (for एतैर्). D6 युक्त-.

धर्मार्थशास्त्रतत्त्वज्ञः संधिविग्रहको भवेत् ।
मतिमान्धृतिमान्धीमान्रहस्यविनिगूहिता ॥ २९
कुलीनः सत्यसंपन्नः शक्तोऽमात्यः प्रशंसितः ।
एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ॥ ३०
व्यूहयन्त्रायुधीयानां तत्त्वज्ञो विक्रमान्वितः ।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ ३१
विश्वासयेत्परांश्चैव विश्वसेन्न तु कस्यचित् ।
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥ ३२
एतच्छास्त्रार्थतत्त्वं तु तवाख्यातं मयानघ ।
अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥ ३३

इति श्रीमहाभारते शान्तिपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

# ८७

## युधिष्ठिर उवाच ।

कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ १

## भीष्म उवाच ।

यत्र कौन्तेय वस्तव्यं सपुत्रभ्रातृबन्धुना ।
न्याय्यं तत्र परिप्रष्टुं गुप्तिं वृत्तिं च भारत ॥ २

C. 12. 3229
B. 12. 86. 2
K. 12. 86. 2

---

— $^{b}$) $K_1$ ( before corr. ) $G_3$ प्रतीहारस्य; $B_5$ $D_a$ °हारोंग-; $D_4$ M प्रतिहारोस्य; $D_7$ $T_1$ $G_4$ प्रतीहारेस्य; $G_2$ परिहारोस्य. $C_a$ cites प्रतीहारो ( as in text ). $V_1$ रक्षितः. — $K_4$ om. $28^{cd}$. — $^{c}$) $D_7$ $T_1$ $G_{2-4}$ शरीरेण च नी( $G_2$ री )रूक्षो.

29 $T_2$ $G_1$ om. $29^{abc}$ (cf. v. l. 27). $V_1$ reads 29 on marg. — $^{a}$) $K_{2.3.5}$ $Bo._{3-5}$ Dn $D_{2.3.5-8}$ S ( $T_2$ $G_1$ om.) धर्मशास्त्रार्थतत्त्वज्ञः. — $^{b}$) $M_{1.3.4}$ साक्षी ( for संधि- ). $K_{2.3}$ $V_1$ B ( $B_1$ missing ) $D_a$ Dn $D_{3.5.7.8}$ $T_1$ $G_4$ -विग्रहिको. $K_5$ संधिविग्रहकोविदः; $M_2$ साक्षि-विग्रहतो भवेत्. — $^{c}$) $K_2$ धृतिमान्; $K_3$ $D_4$ स्मृति° ( for मति° ). $K_{1.2.4}$ $Bo._{3-5}$ $D_{2.3.5.7.8}$ S ( $T_2$ $G_1$ om. ) स्मृतिमान्; $K_3$ मति° ( for धृति° ). $K_3$ धीरो; $K_5$ $V_1$ B ( $B_1$ missing ) D ( except $D_4$; $D_1$ missing ) ह्रीमान् ( for धीमान् ). — $^{d}$) $D_8$ रहस्यं; $C_a$ रंध्रस्य ( for रहस्य- ). $D_6$ -गूहता ( for -गूहिता ). $D_7$ ऊहादिभिरतंद्रितः; S रहस्ये परि( $G_2$ रहस्योपरि-; $M_2$ राहस्ये परि )निष्ठितः.

30 $V_1$ reads $30^{a}$ on marg. — $^{a}$) $K_{2-4}$ $V_1$ B ( $B_1$ missing ) $D_a$ Dn $D_{4.6}$ $T_2$ $G_{1.2}$ M सत्त्वसंपन्नः; $K_5$ $D_{2.3.5.8}$ शील° ( for सत्य° ). — $^{b}$) $K_5$ $V_1$ $Bo._5$ Dn $D_{2.3.5-7}$ T $G_{2-4}$ $M_2$ शुक्तो; $B_3$ शुद्धो; $G_1$ $M_4$ शक्यो ( for शक्तो ). $M_{1-3}$ मान्यः ( for ऽमात्यः ). $Ś_1$ $K_{1.2.4}$ $V_1$ $D_4$ प्रशंसिता; $K_5$ Dn $D_{2.3.5-8}$ S प्रशस्यते; $B_3$ प्रशंसिते. — $^{c}$) $D_2$ युक्तास. — $^{d}$) $D_2$ om. (? hapl.) from सेना up to विश्व (in $32^{b}$).

31 $D_2$ om. 31 (cf. v. l. 30). — $^{a}$) $K_{4.5}$ $V_1$ B ( $B_1$ missing ) $D_a$ Dn $D_{3.5.6.8}$ -यंत्रायुधानां च ( $B_2$ $D_a$ तु ); $T_2$ °युधीयानस्; $M_{1.3}$ °युधादीनां ( for °युधीयानां ). — $^{b}$) $K_1$ तत्त्वज्ञ-. — $^{d}$) $K_1$ परि- ( for पर- ).

32 $D_2$ om. up to विश्व (cf. v. l. 30). — $^{b}$) $K_3$ $D_4$ नैव; $K_4$ तन्न; $K_5$ $Bo._{3-5}$ $D_8$ न च; $V_1$ $B_2$ $D_a$ Dn $D_{6.7}$ S च न ( for न तु ). — $^{c}$) $K_3$ $M_2$ च ( for हि ). $D_4$ अपुत्रेष्वपि राजेंद्र. — $^{d}$) $Ś_1$ $K_2$ प्रशंस्यते; $K_3$ प्रशस्यसे.

33 $^{a}$) $Ś_1$ च ( for तु ). — $^{b}$) $K_{2.3.5}$ $V_1$ B ( $B_1$ missing ) D ( except $D_4$; $D_1$ missing ) S मयाख्यातं तवा( $K_{2.3}$ मया )नघ. — $^{d}$) $D_7$ T G अप्यु( $T_2$ G °च्यु )त ( for उच्यते ).

Colophon: $B_1$ $D_1$ missing. — *Sub-parvan :* $Ś_1$ K $V_1$ B ( $B_1$ missing ) $D_{2-7}$ T $G_{1.2.4}$ M राजधर्म. — *Adhy. name :* $Ś_1$ $K_{1.2.4}$ $V_1$ $Bo._{3.5}$ $D_a$ $D_{3.5}$ अमात्यविभागः; $K_3$ $D_4$ अमात्यवर्णनं. — *Adhy. no.* (figures, words or both): $K_5$ S 87; $B_4$ 84; $Dn_2$ 85. — *Śloka no.:* $Dn_1$ 34; $D_8$ 33.

## 87

☞ $B_1$ $D_1$ are missing for this adhy. (cf. v. l. 12. 83. 24 and 79. 28).

1 $D_8$ om. the ref. — $^{a}$) $D_4$ कथंविधे. $D_8$ राज्ञा ( for राजा ). — $^{b}$) $M_4$ समयम् ( hypermetric ) ( for स्वयम् ). $M_{1.3}$ एवास्तुम् ( for आवस्तुम् ). — $^{c}$) $D_7$

C. 12. 3230
B. 12. 86. 3
K. 12. 86. 3

तस्मात्ते वर्तयिष्यामि दुर्गकर्म विशेषतः ।
श्रुत्वा तथा विधातव्यमनुष्ठेयं च यत्नतः ॥ ३
षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् ।
सर्वसंपत्प्रधानं यद्बाहुल्यं वापि संभवेत् ॥ ४
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गमब्दुर्गं वनदुर्गं च तानि षट् ॥ ५
यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम् ।
दृढप्राकारपरिखं हस्त्यश्वरथसंकुलम् ॥ ६
विद्वांसः शिल्पिनो यत्र निचयाश्च सुसंचिताः ।
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ ७
ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम् ।
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ॥ ८
सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम् ।
शूराढ्यजनसंपन्नं ब्रह्मघोषानुनादितम् ॥ ९
समाजोत्सवसंपन्नं सदापूजितदैवतम् ।
वश्यामात्यबलो राजा तत्पुरं स्वयमावसेत् ॥ १०

---

T1 G2–4 कृत्वा वा; M3 स्वकृतं (for कृतं वा). Ca cites कृतं (as in text).

2 D8 om. the ref. — a) Ś1 भूपेण (for कौन्तेय). B2 Da Dn D6 वस्तव्यं यत्र कौंतेय. — b) D7 सुपुत्र-; G3 सभृत्य- (for सपुत्र-). Bo. 2. 5 Da Dn D2. 3. 5. 6 -ज्ञाति- (for -भ्रातृ-). M2 -बंधुमान्. D4 सपुत्रं भ्रातृबांधवैः. — c) K1 D8 T G1. 3. 4 न्यायं; K4 B2 न्याय्यस् (B2 °य्या); B2 m Da कार्या (for न्याय्यं). — d) Ś1 (by corr. sec. m.) K1 D4 गुप्तिवृत्तिश् (sic); K2. 4 गुप्तवृत्तिं (K2 °त्तिश्); K3 गुप्तिर्वृत्तिश्; B2 Da वृत्तिगुप्तिश्; B5 Dn D6 वृत्तिं गुप्तिं (by transp.); D7 (by corr.) गुप्तं वृत्तं; D8 गुप्तिं वृत्तं. G1 नारद (for भारत).

3 a) K5 तु (for ते). Ś1 K1. 5 वर्णयिष्यामि; K2. 4 वद° (for वर्त°). — c) Da तदा (for तथा). — d) D4 तद्विद्वेयें (sic) (for अनुष्ठेयं). V1 Bo. 3–5 D2. 3. 5. 8 प्रयत्नतः (for च य°).

4 b) D7 S [अ]भि- (for [अ]थ). — c) Da सर्वं तस्य; M2 सर्वं सम्यक् (for सर्वसंपत्-). Da तद्; D7 T G च (for यद्). — d) D7 T G M4 बाहुल्यं (M4 °ल्यं); D8 बाहुभ्यां. K2–5 V1 B (B1 missing) D (except D7; D1 missing) T2 G1. 2 च (for वा). K3 D4 (also as in text) [अ]थ; M2 [अ]ति- (for [अ]पि). B2. 4 यद्भवेत्; D4. 7 S [अ]संभवे (M2 °वेत्) (for संभवेत्).

5 Cf. Manu. 7. 70; Matsya 216. $6^{c}$–$7^{d}$; Viṣṇudharmottara II. 26. $6^{c}$–$7^{d}$; III. 323. 16; Agni 222. $4^{cd}$–$5^{cd}$. — a) Ś1 K1 बंधदुर्गं; K4 बंधुदुर्गं; K5 धन°; Bo. 2 D2. 5 धनु°; B3. 4 D8 G1 धनुर्दुर्गं; D7 G2–4 धान्यदुर्गं; T1 (before corr. as in text) धान्व°; Ca धन्व° (as in text). — c) K2. 3 V1 B5 Da Dn2 D8 मृद्दुर्गं; K4 संदुर्गं; G1 दुर्गं च (for अब्दुर्गं). Ś1 K1 मनुष्यदुर्गमं दुर्गं; K5 D4 (both hypermetric) °दुर्गमपां (D4 °अ-) दुर्गं; D2. 3. 5. 6 °द्रुमदुर्गं च. Ca cites मनुष्यदुर्गः. — d) Ś1 K1. 2. 4 नव (K4 वन-) दुर्गाणि तानि षट्.

6 a) K4 परं; G2 पुनर् (for पुरं). K3 D4 -संसर्गं (for -संपन्नं). — b) Ś1 G4 धान्यायुत-; V1 नानायुध- (for धान्या°). — c) G1 दृढप्रधान-; M2. 4 °प्रकार-. Ś1 K2. 4 D7 G1. 3. 4 -परिघं; K3 D3. 4 -परिषं; V1 -विषमं (for -परिखं).

7 a) G1 शिल्पिते. — b) Bo ह्र संचिताः; D7 सुसंचयाः (for °चिताः). — c) D6 जना. Ś1 K4 D4 धार्मिकाश्च जना य(K4 जनाप्य)त्र. — d) K4. 5 D2. 8 दाक्ष्य; D4 दाक्षम्; G1 दाक्ष्यैम्. Ś1 K4 D4 G2 आस्थिताः.

8 a) K4 ऊर्जस्व-; D4 °स्वीन्; D7 औजस्वि-; G1 M1. 3. 4 ऊर्जस्वी-. Ś1 K1. 4 G3 -नागाश्च-; Da D2–5. 7 T G1 -नागा(D8 °गां)श्च; D6 -नागाश्वां (for °श्वं). — b) D7 G1 चत्वारापण- (for चत्व°).

9 a) K4. 5 B3 D2. 3. 5. 8 प्रसभं (for सुप्रभं). V1 Bo. 2. 3. 5 Da शांतनादं; B4 श्रांत°; D6 शांति°; G1 भानु°; M2 सानुदानं (for °नादं). — b) K4 सुप्रशांत-; D2 M1. 3 °प्रशस्तं. Bo -निवेदनं (for °शनम्). — D8 om. (hapl.) $9^{c}$–$10^{b}$. — c) D4 शूराढ्यं. Ś1 K1 -गुणसंपन्नं; B2 Da -जनसंपूर्णं (for °संपन्नं). T G शूराढ्यं प्राज्ञसंपूर्णं. — d) D4 -नादिनं.

10 D8 om. $10^{ab}$ (cf. v. l. 9). — b) D4 G2 -देवतं. V1 सदादैवतपूजितं. — c) K1 lacuna; G1 पश्य (for वश्य-). — d) Ś1 K1. 3 आविस(K1. 3 °से)त्; V1 Bo Da1 Dn D2–7 S आविशेत् (for आवसेत्).

11 Da1 om. (hapl.) 11. — a) K4 यत्र (for तत्र). V1 D3. 5 कोष-; B (B1 missing) Dn2 कोषं; D8

तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत् ।
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत् ॥ ११
भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत् ।
निचयान्वर्धयेत्सर्वांस्तथा यन्त्रगदागदान् ॥ १२
काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान् ।
मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च ॥ १३
शणं सर्जरसं धान्यमायुधानि शरांस्तथा ।
चर्म स्नायु तथा वेत्रं मुञ्जबल्बजधन्वनान् ॥ १४
आशयाश्चोदपानाश्च प्रभूतसलिला वराः ।
निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः ॥ १५
सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।
महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ॥ १६
प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः ।
कुलीनाः सत्त्वसंपन्ना युक्ताः सर्वेषु कर्मसु ॥ १७
पूजयेद्धार्मिकान्राजा निगृह्णीयादधार्मिकान् ।
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान्स्वकर्मसु ॥ १८
बाह्यमाभ्यन्तरं चैव पौरजानपदं जनम् ।
चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥ १९

C. 12. 3246
B. 12. 86. 19
K. 12. 86. 19

---

कोश-; M1 शोकं (for कोशं). K1 नित्यं (for मित्रं). — b) D8 वर्जयेत् (for वर्ध°). — After $11^{ab}$, Dn2 reads $12^{cd}$. — c) D2 पुरो. Da2 चैवं. — d) Da2 सर्वघोषं; D7 °दोषं (for °दोषान्). V1 निवर्जयेत् (for निवर्त°).

12 a) K3 D4 M4 Cv भांडागारायु( D4 °न्यु )धागारान्. — b) G1 [अ]पि (for °भि-). — Dn2 reads $12^{cd}$ after $11^{ab}$. — c) M2 om. (hapl.) निचयान्वर्धयेत्. M1.3.4 निचे( M1 °पे )यान् (for निच°). D4 नयान्संवर्धयेत्सर्वांस्. — d) K4.5 B (B1 missing) Dn D2.3.5.6.8 तथा यं( Dn मं )त्रायुधालयान्; V1 Da तथा यंत्रायुधाकुलान् (Da °नयान्); D4 तथा यंत्रगदांग[दागा ?]रान्; D7 T G तथा यंत्रकटंकटान्.

13 a) G4 -तुषांगारान्. K5 Bo.3 D2.3.5.8 काष्ठं (D8 °ष्ठ-) लोहं तथांगारं (K5 D2 °र-). — b) D2.3.6 जतु- (for -दारु-). K3 D4 -वेणवान्. D7 S दारुपाषाणसंचयान्. — c) K1 मज्ञा-; B2–4 मज्ज-; D4 आप्य-; D6 मज्जे (for मज्जा-). Ś1 K1.2.4 -वचाक्षौद्रम्; V1 Bo.3 D2.3.7 -वशा°; S -वसाक्षौद्रान् (T2 G2 °द्राणि). — d) K1 -ग्रासम् (for -ग्रामम्). D7 T G M1.3.4 औषधान्यगदानि च; M2 औषधानगदानि च. Ca cites औषधग्रामः.

14 a) Ś1 K2 घन-; K1 सण-; K3 D4 सणं; K4 शना-; K5 शाण-; V1 Bo.4.5 Da D2.7 T G2–4 M शण-; B2 षणं; B3 सन- (for शणं). G1 शणसर्जरबंधान्यम्. — c) K2 धनुर्; Da वर्म (for चर्म). D4 धन्वस्नायुस् (for चर्म स्नायु). K1.3.5 Da Dn D6 स्नायुं; K2 वायुं (for स्नायु). G1 युधां (for तथा). V1 B (B1 missing) D2–5.7.8 T G2–4 M1.3.4 वेत्र-; Da वेणु-; G1 पेक्रि- (sic) (for वेत्रं). — d) K2 -वल्कल-; D8 -वज्वल-; G2 -बिल्वज- (for -बल्बज-). K3 Dn2 Cn -दंध्वनान्; G3 -धान्वनान्; G4 -धन्विनः (for -धन्वनान्). Ś1 K1 मुंजवल्कलधन्वनां; K4 °बल्वलधन्वना; K5 °बल्वलबंधनान्; V1 Da °बंधनबंधनान्; D4 °बिल्वजबंधनान्; D6 °वल्कलबंधनात्; D7 °बल्वलधन्वनां; T2 °जल्वचधन्वनः; G1 corrupt; M मुंज( M1 अब्ज )-धन्वनबल्बजान्; Cv as in text. Cnp cites बंधनान्.

15 a) K3 आश्रयाश्; B2 Da आहाराश्; M1 आधाराश्; M3.4 आरामाश् (for आशयाश्). V1 आहारश्चोदपानश्च; D2.3.5 आशयांश्चोदपानांश्च; D7 T G आरामांश्चोदपानांश्च; M1 आरामाश्चोदुपानाश्च. Ca cites आहारः and उदपानः. — b) K4.5 V1 B (B1 missing) Da Dn D2.3.5.6.8 G2 कराः; M1.3 पराः (for वराः). D7 T G1.3.4 प्रभूतसलि( G1 °ब )लान्वरान्. — c) K1 निरोद्धव्यः; M2 °धव्याः. — d) Da ये (for च). G4 महीरुहः.

16 D2.3 om. 16. — a) K5 सत्कृतश्; D5 सद्रताश्. K1 यत्नेन (submetric) (for प्रय°). — c) K1 महेश्वासः. Ś1 K1.2.4 प्रकृतयः; D6 च यतयः; Ca स्थपतयः (as in text). — d) V1 संवत्सर-. Cv cites सांवत्सराः. Da2 -चिकीर्षकाः; D6 -चिकित्सिकाः.

17 ab) Dn2 D8 M2 प्रज्ञा. D7 T G transp. दान्ताः and दक्षाः. B2 D8 दक्षः. D6 बहिःश्रुताः (for बहुश्रुताः). — c) V1 B3 D2.3.5 बुद्धि- (for सत्त्व-). — d) D2 युक्तः. G1 M1.2 युक्ताः सर्वे स्वकर्मसु.

18 Ś1 K1.4 D8 om. (hapl.) 18. — a) D7 प्रजयेद् (for पूज°). — b) D2 निगृह्णायाद्. — c) Da2 T1 G3.4 नियुज्याच्; G1 नियुज्य (for नियुञ्ज्याच्).

19 a) D6 बाह्याम्. V1 Bo.2.3.5 D2.3.5.8 G3

C. 12. 3247
B. 12. 86. 20
K. 12. 86. 20

चारान्मन्त्रं च कोशं च मन्त्रं चैव विशेषतः ।
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥ २०
उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥ २१
ततस्तथा विधातव्यं सर्वमेवाप्रमादतः ।
भक्तान्पूजयता नित्यं द्विषतश्च निगृह्णता ॥ २२
यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया ।
प्रजानां रक्षणं कार्यं न कार्यं कर्म गर्हितम् ॥ २३
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥ २४
आश्रमेषु यथाकालं चेलभाजनभोजनम् ।
सदैवोपहरेद्राजा सत्कृत्यानवमन्य च ॥ २५
आत्मानं सर्वकार्याणि तापसे राज्यमेव च ।
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा ॥ २६
सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम् ।
पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ॥ २७
तस्मिन्कुर्वीत विश्वासं राजा कस्यांचिदापदि ।
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ॥ २८
तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च ।
न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥ २९

---

अभ्यंतरं; $D_6$ आभ्यंतरे. —$^{b}$) Dn $D_{2.3.5}$ तथा (for जनम्). —$^{c}$) $Bo._5$ चरैः. $D_2$ सुविहितं; $G_1$ °कृतं (for °दितं). —$^{d}$) $D_7$ S (except $G_2$) तत्तत् (for ततः). $G_3$ प्रचोदयेत् (for प्रयोज°).

20 $^{a}$) $K_1$ चरां; $K_4$ $B_{3-5}$ $Dn_2$ $D_{2.3.8}$ चरान्; $V_1$ $D_5$ चरन्; $B_2$ $D_{6.7}$ S चारं; Da चारन् (for चारान्). $G_2$ कर्मं; M दंडं (for मन्त्रं). $V_1$ B ($B_1$ missing) $Da_2$ $D_{3.5}$ कोषं (for कोशं). —$^{b}$) $K_{2.3.5}$ $V_1$ B ($B_1$ missing) D ($D_1$ missing) T G दंडं; M मित्रं (for मन्त्रं). —$^{c}$) $G_{1.2}$ अनुतिष्ठत्. —$^{d}$) $K_1$ अत्र; $Da_2$ यत्र (for ह्यत्र).

21 $^{b}$) Da एतच् (for एव). —$^{c}$) $K_1$ $D_4$ जानपदे. $D_4$ [इ]व (for [ए]व). —$^{d}$) $D_7$ S (except $T_2$) ज्ञान- (for चार-).

22 $^{a}$) $V_1$ $B_2$ Da तथा (for ततस्). $K_5$ $Bo._{3-5}$ Dn $D_{2.3.5.6.8}$ तेषां (for तथा). —$^{b}$) $D_6$ [अ]प्रमादिनः (for °दतः). — After 22$^{ab}$, $D_7$ reads 30–31. —$^{c}$) $M_{1.4}$ भक्ता. $Ś_1$ $K_1$ $D_4$ पूजयिता. —$^{d}$) $G_1$ द्विषदश्; $M_2$ द्विषतां. $Ś_1$ $K_4$ निगृह्णतः.

23 $^{a}$) $K_4$ श्रुतुभिर् (sic). —$^{b}$) $B_2$ Da [अ]नुसूयता; Ca [अ]प्यपीडया (as in text). —$^{c}$) $D_5$ स्वजनं (for प्रजानां). —$^{d}$) $K_3$ $Dn_1$ धर्मबाधकं; $Bo._5$ धर्मगर्हितं; $Dn_2$ कर्म बाधकं; $D_4$ धर्मबंधनं (for कर्म गर्हितम्).

24 = (var.) Agni 225. 25; (var.) Matsya 214. 61$^{cd}$–62$^{ab}$. With 24$^{ab}$, cf. 12. 78. 18. —$^{a}$) Da कृपणानां च (for °णानाथ-). $M_3$ -विद्धानां (for -वृद्धानां). —$^{c}$) $D_4$ $T_1$ $G_4$ वित्तं (for वृत्तिं). —$^{d}$) Da प्रयोजयेत् (for प्रकल्प°).

25 Cf. Matsya 214. 63$^{cd}$–64$^{ab}$. —$^{a}$) $Ś_1$ $K_{3.4}$ $D_4$ $T_2$ $G_{1.2}$ यथाकामं (for °कालं). —$^{b}$) $K_{2.3.5}$ Da Dn $D_{2.3.6}$ चैल- (for चेल-). $K_1$ चलताजनभोजनं (sic); $Bo._5$ $D_7$ S चेलभोजनभाजनं (M °जनात्). —$^{c}$) $D_7$ T G स्वयं तु (for सदैव). $D_4$ [अ]पहरेद्; $T_2$ $G_1$ [उ]पचरेद् (for °हरेद्). — $G_2$ om. (hapl.) 25$^{d}$–27$^{a}$. —$^{d}$) $K_5$ $V_1$ $Bo._{3-5}$ Da $D_{5.6.8}$ सुकृतान्यनु($D_5$ °ल्पसु)मान्य च; $B_2$ Dn $D_{2.3}$ सत्कृत्याभ्यर्च्य ($D_2$ °र्यानु-; $D_3$ °र्च्यानु-) मान्य च; $D_7$ S ($G_2$ om.) सत्कृत्यानवमत्य च.

26 $G_2$ om. 26 (cf. v. l. 25). —$^{a}$) $M_2$ आत्मने. —$^{b}$) $G_1$ $M_2$ तपसे; $M_3$ तापसो. $K_5$ Da Dn राष्ट्रम् (for राज्यम्). —$^{c}$) $D_4$ निवेदयन् (for °येत्). —$^{d}$) $Ś_1$ $K_2$ $M_2$ तिष्ठन् (for तिष्ठेत्). $M_1$ प्रह्वं; Ca प्रह्वः (as in text). $V_1$ सर्वथा; $B_2$ Da $D_7$ T $G_{1.3.4}$ $M_{1.3.4}$ नित्यदा (for सर्वदा). — After 26, $D_7$ reads 32.

27 $G_2$ om. 27$^{a}$ (cf. v. l. 25). —$^{a}$) $M_2$ सर्वात्म- (for सर्वार्थ-). —$^{b}$) $D_6$ om. (hapl.) from 27$^{b}$ up to राजा (in 28$^{b}$). $K_3$ $D_4$ कुल- ($D_4$ °ल्य-) (for कुले). $M_2$ बहुश्रुतः. —$^{c}$) $G_2$ तादृशान्. —$^{d}$) $B_{2.3}$ शयनाशन- (for °सन-).

28 $D_6$ om. up to राजा (cf. v. l. 27). —$^{a}$) $B_{3.5}$ $D_{2.3.5.8}$ तस्मै (for तस्मिन्). —$^{c}$) $V_1$ $Bo._3$ विश्वासान्. —$^{d}$) $D_7$ T G नाधि- (for अपि). $D_6$ om. दस्यवः.

29 $B_4$ om. 29$^{a}$–31$^{b}$. —$^{a}$) $D_7$ तस्मान्; $G_2$ अस्मिन्. $D_7$ $G_1$ आददीत; $T_2$ °दते (for °धीत). —$^{b}$)

अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः ।
अटवीष्वपरः कार्यः सामन्तनगरेषु च ॥ ३०
तेषु सत्कारसंस्कारान्संविभागांश्च कारयेत् ।
परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ॥ ३१

ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः ॥ ३२
एष ते लक्षणोद्देशः संक्षेपेण प्रकीर्तितः ।
यादृशं नगरं राजा स्वयमावस्तुमर्हति ॥ ३३

इति श्रीमहाभारते शान्तिपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## ८८

युधिष्ठिर उवाच ।
राष्ट्रगुप्तिं च मे राजन्राष्ट्रस्यैव च संग्रहम् ।
सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १

भीष्म उवाच ।
राष्ट्रगुप्तिं च ते सम्यग्राष्ट्रस्यैव च संग्रहम् ।
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥ २

C. 12. 3262
B. 12. 87. 2
K. 12. 87. 2

---

K1.4 पर्यादधीत; K2.3 Bo.3.5 Dn2 °ददीति; B2 °नयेत (for °ददीत). K1 वै (for च). V1 राजा पर्यादपीति च; Da राजा पर्यानयेन च; D7 S पुनः प्रत्याददी(T2 °धी)त च. — c) B2 न चाभीक्ष्णं च सेवेत. — d) V1 D3.4 चाप्रतिपूजयेत्; B2 Da D8 च प्रति°; T2 वाप्यभिवीक्षते.

30 B4 om. 30 (cf. v. l. 29). D7 reads 30–31 after $22^{ab}$. — a) D7 अन्यकार्यात्; G1 अन्यकार्य·; M4 अन्याकार्यः. D6 विराष्ट्रेषु. — b) K1 om. परराष्ट्रेषु. — K3 om. (? hapl.) $30^{cd}$. — c) K4.5 B2.3 Da Dn D2.3.5.8 परः (for [अ]परः). — d) Ś1 Dn -नगरेष्वपि; K1.2.4 D4.6.7 T G °रे परः; M1.3 °रे चरः (for °रेषु च). Ca cites सामंतनगरे.

31 B4 om. $31^{ab}$ (cf. v. l. 29). — a) K3.5 V1 B3 D2.5 D4.8 -संमानात् (V1 D4 °न्); Bo.5 M -संपन्नान्; B2 Da -संमानं; Dn1 -मानाभ्यां; D6 -सन्मानं; D7 T G -संपन्नः (for -संस्कारान्).. — b) Da D6.7 T G3.4 संविभागं; G1 डंभभागं (for संविभागांश्). K3 पूजयेत् (for कार°). — c) Da पर-राष्ट्राटवीस्थे च; G2 °वीष्वेषु. — d) D7 S यथात्म- (for यथा स्व-). K2 -विषयेषु च; G4 °ये तदा.°

32 D7 reads 32 after 26. — c) Ś1 K3 राज्ये; G3 राज्ञो. K1 दभ्युर्; Da पत्युर्; Dn1 M4 दस्युर् (for दद्युर्). — d) K1.4 संश्रितव्रताः; K3 D3.4.8 शंसित°; D5 संगित°.

33 a) V1 एते च; D7 एतत्ते (for एष ते). K4 लक्षणो देशः. — c) K3.4 Dn D4.6 यादृशे नगरे राजा.

Colophon: B1 D1 missing. — *Sub-parvan:* Ś1 K V1 B2–4 Da Dn D2–7 T G1.2.4 M राजधर्म. — *Adhy. name:* K3.5 V1 B2.4 दुर्गपरीक्षा; B5 पुरनिवेशः; Da नगरपरीक्षा; D4 नगरस्थानं; M1.3 पुरलक्षणकीर्तनं. — *Adhy. no.* (figures, words or both): B3 Da Dn2 86; B4 Dn1 D2 85; D7 S 88; D8 83. — *Śloka no.:* Dn1 33; D8 31.

## 88

☞ B1 D1 are missing for this adhy. (cf. v. l. 12. 83. 24 and 79. 28).

1 G2 om. 1 with the ref. — a) Ś1 K2 G1 राष्ट्रे; D7 राज्य- (for राष्ट्र-). Ca cites राष्ट्रगुप्तिं (as in text). K5 ते (for मे). K5 D8 सम्यग् (for राजन्). — b) K1 राष्ट्रमेव; V1 D8 राष्ट्रं चैव (for राष्ट्रस्यैव). K3 Dn1 तु; V1 स; D8 [अ]स्य; M4 ह (for च). M1.3 संग्रहः. — V1 reads $1^{c}$–$2^{b}$ on marg. — c) T2 G1 सद्यो (for सम्यग्). V1 Bo.5 Da D6 -मानस्य (for -मानाय). — d) M4 भरतर्षभः.

2 D8 om. the ref. V1 reads $2^{ab}$ on marg. — a) D6 G2 मे (for ते). Bo.2.5 राजन् (for सम्यग्). — b) D8 राष्ट्रं चैव (for राष्ट्रस्यैव). K3 Dn D4 तु; D8 [अ]स्य (for च). — c) M एतत्; Ca हन्त (as in text). D7 T1 G2–4 ते संप्र-; G4 एकं प्र- (for सर्वं प्र-). — d) M2 तदिह (for तत्त्वम्).

3 With 3, cf. Manu. 7. 115. — b) K1.2.4 दश-

C. 12. 3263
B. 12. 87. 3
K. 12. 87. 3

ग्रामस्याधिपतिः कार्यो दशग्राम्यस्तथापरः ।
द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ॥ ३
ग्रामे यान्ग्रामदोषांश्च ग्रामिकः परिपालयेत् ।
तान्ब्रूयाद्दशपायासौ स तु विंशतिपाय वै ॥ ४
सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ॥ ५
यानि ग्रामीणभोज्यानि ग्रामिकस्तान्युपाश्नुयात् ।
दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः ॥ ६
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ।
महान्तं भरतश्रेष्ठ सुस्फीतजनसंकुलम् ।
तत्र ह्यनेकमायत्तं राज्ञो भवति भारत ॥ ७
शाखानगरमर्हस्तु सहस्रपतिरुत्तमम् ।
धान्यहैरण्यभोगेन भोक्तुं राष्ट्रिय उद्यतः ॥ ८
तथा यद्ग्रामकृत्यं स्याद्ग्रामिकृत्यं च ते स्वयम् ।
धर्मज्ञः सचिवः कश्चित्तत्प्रपश्येदतन्द्रितः ॥ ९
नगरे नगरे च स्यादेकः सर्वार्थचिन्तकः ।

---

ग्रामस; Ca °ग्राम्यस् (as in text). D7 T G दश-ग्रामपतिस्तथा. — c) D2. 3. 5 द्विगुणोन्यः; Ca °णायाः (as in text). Ś1 K2. 4 च तस्यैवं; D4. 6 शतस्यैव. D7 विंशत्यादि शतं चैव; T1 G3. 4 M विंशतीशं शतेशं च (M4 °शस्य); T2 G2 विंशत्रिंशच्छतेशं च; G1 विंशति-त्रिंशतेशं च.

4 With 4, cf. Manu. 7. 116. — a) Ś1 K1. 2. 4 Ca ग्रामीयान् (for ग्रामे यान्). Cb cites ग्रामेयान्. K1 -दोषाश्च. — b) Ś1 K1. 2 ग्रामतः; G1. 2 ग्रामिकं (for °कः). K3 Dn D2-4 प्रति(D2. 3 परि)भावयेत् (for परिपालयेत्). — c) V1 B2 Da तद् (for तान्). K1 देशपाय; Ca दश° (as in text). — d) K1 मंत्रं; B2 Da स च (for स तु). D2 स तु विंशतिपापदे. — For 4cd, D7 S subst.:

209* तानाचक्षीत दशिने दशको विंशिने पुनः ।

[G4 तानाचक्षेत; M2 आचचक्षीत (for तानाच°). D7 दशिको; T2 G2 दशिनो (for दशको). G1 विंशके; G2 विंशिनो; G4 विंशिके (for °ने). M दशी (M2 °शि-) विंशतिने तथा (for the post. half).]

5 With 5, cf. Manu. 7. 117ab. — a) K1 -[ज]धि पतिं. D7 S विंशाधिप(D7 T2 G1 °पा)स्तु तत्सर्वं. — b) Bo वृत्तिं; D1. 3 वृतं; Ca वृत्तं (as in text). K2 जनपदे; Da दानपते. — d) B3. 4 D2. 3. 5. 8 एवं; D7 T G2-4 M1-3 एतन्; G1 ते तन् (for एव). M4 शती चापि सहस्रिणे.

6 With 6ab, cf. Manu. 7. 118. — a) K4. 5 Bo. 3-5 Dn D2. 3. 5. 8 ग्राम्याणि (K4 °नि); V1 B2 Da D6. 7 S ग्रामिक- (for ग्रामीण-). — b) Ś1 G1 M1 ग्रामिकास्; T2 ग्रामकास्; Ca ग्रामिकः (as in text). K2. 3. 5 B2 Dn D6 तान्युपाश्नि(D6 °श्र)यात्; V1 Bo. 3-5 D2. 3. 5. 8 तान्य(D2. 3. 5 °न)वाप्नुयात्; D7 S तान्युपा(G1 °प)श्नुते (for °श्नुयात्). — With 6cd, cf. Manu. 7. 119ab. B3 om. 6cd. — c) K1. 4 दशमस् (for °पस्). K4 भर्तव्यं; V1 Bo. 5 Da वक्तव्यस्; B3. 4 D2. 3. 5. 8 तद्देयस् (for भर्तव्यस्). — For 6cd, D7 S subst.:

210* दशिनेन विभक्तव्यो दशिना विंशतिस्तथा ।

[T2 G1 दशितेन; M दशी तेन (for दशिनेन). D7 विभक्तव्या (for °क्तव्यो). T2 M1. 3 दशिनां; M2 °नो (for °ना). D7 विंशिनस्; T1 विंशिकस्; G1. 3. 4 M2. 4 विंशकस् (for विंशतिस्).]

7 With 7, cf. Manu. 7. 119ab. — b) Da पार्थिव; G1 यत्कृतः (for सत्कृतः). — c) K1 महातें; D7 T1 G तदा तद्; T2 तदा तु (for महान्तं). V1 Da नगर- (for भरत-). — d) K2. 3 V1 B4. 5 Da Dn1 D2. 3. 6 T1 G3. 4 M2 सुस्फीतं; D7 सुस्थितं; G1 सुप्सीत- (for सुस्फीत-). D6 जल- (for -जन-). — f) B4 D5 राष्ट्रे; D2. 3. 8 राष्ट्रं (for राज्ञो).

8 a) D2. 3. 5 Ca शाखानगरमुख्यस्तु. — b) Ś1 K1 सहस्रपतिम्. K1 उद्गमं; K3. 5 Dn D4 उत्तमः (for °मम्). — c) B2 Dn धान्यं (for धान्य-). Dn1 हिरण्यं (for -हैरण्य-). D2. 3. 5 -भोग्येन; D4 -भागं न (for -भोगेन). — d) D4 भोगे (for भोक्तुं). K1 राष्ट्रियम्; K2. 5 V1 Da Dn D2. 4. 7 S राष्ट्रीय- (for राष्ट्रिय). K4 उद्यतः; K5 V1 B (B1 missing) Da D2-8 T1 G M1. 2 -संज्ञितः (V1 B5 °तं); Dn -संगतः; T2 -संवृतः; M4 -संहिकः (for उद्यतः).

9 With 9, cf. Manu. 7. 120. — a) All MSS. (except Ś1 K1. 2. 4; B1 D1 missing) ते(D6 ये)षां (for तथा). K4. 5 V1 B (B1 missing) Da Dn D2. 3. 5. 8 संग्रामकृत्यं (for यद्ग्राम°). — b) K5 B (B1 missing) Da Dn D2. 3. 6. 8 ग्रामकृत्यं; V1 ग्राम्य°; D5 ग्रामतर (sic); D7 राष्ट्रकृत्यं (for ग्रामि°). Bo तु (for

उच्चैःस्थाने घोररूपो नक्षत्राणामिव ग्रहः ।
भवेत्स तान्परिक्रामेत्सर्वानेव सदा स्वयम् ॥ १०

विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजः कारयेत्करान् ॥ ११

उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् ।
शिल्पप्रतिकरानेव शिल्पिनः प्रति कारयेत् ॥ १२

उच्चावचकरा न्याय्याः पूर्वराज्ञां युधिष्ठिर ।
यथा यथा न हीयेरंस्तथा कुर्यान्महीपतिः ॥ १३

फलं कर्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत् ।
फलं कर्म च निर्हेतु न कश्चित्संप्रवर्तयेत् ॥ १४

यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ।
समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः ॥ १५

C. 12. 3271
B. 12. 87. 18
K. 12. 87. 17

---

च ). K3. 5 V1 B ( B1 missing ) Da Dn D2-6. 8 तेषु यत्; D7 S यद्भवेत् ( for ते स्वयम् ). — d ) K4. 5 B2 Dn2 D6 तत्तत्पश्येद्; V1 Da D7 S तद् ( M2 तान् )- वेक्षेद्; D8 प्रत्यपश्येद् ( for तत्प° ).

10 With 10, cf. Manu. 7. 121ab–122ab. — a ) K3 नागरी ( for the first नगरे ). K4. 5 B2 Dn वा ( for च ). D4 नगरे नगरीयः स्याद्. — b ) D2. 3. 5 सर्वा- ( D2 °र्वो )नु- ( for सर्वार्थ- ). T2 -चिंतनः. — c ) Ś1 K2 G2 उच्चस्थाने; D4 उच्चैःस्थानो; D7 T G2-4 M उच्चस्थानो ( for उच्चैःस्थाने ). Bo घोररूपे. — e ) D7 S स च तान्सं- ( for भवेत्स तान् ). T2 G1 -परिक्रामन् ( for परिक्रामेत् ). — f ) K5 Bo. 2. 3. 5 Dn D2. 3. 5. 8 T2 G1 सभासदः; V1 B4 Da सभासदान्; D7 T1 G2-4 M सदा सदा ( for सदा स्वयम् ). — After 10, K3. 5 V1 B ( B1 missing ) D ( D1 missing ) S ins. ( [ var. ] Manu. 7. 122cd–123cd ):

211* तेषां वृत्तं परिणयेत्कश्चिद्राष्ट्रेषु तच्चरः ।
　　जिघांसवः पापकामाः परस्वादायिनः शठाः ।
　　रक्षाभ्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ।

[ ( L. 1 ) K5 Dn D5. 7 T G3. 4 M तेषां वृत्तिं; D6 वृत्तं तेषां ( by transp. ). D7 T G सम्यग् ( for कश्चिद् ). D7 T G तच्चरैः; M2. 4 तत्परः; Ca तच्चरः ( as above ). — ( L. 3 ) K5 V1 B4. 5 Da D4. 6. 8 M रक्षास्वधिकृता नाम; D7 T G तत्तद्रक्षास्वधिकृताः ( T2 G1. 2 °तः ) ( for the prior half ). ]

11 With 11, cf. Manu. 7. 127. — b ) K5 V1 B ( B1 missing ) Da Dn D2. 3. 5. 6. 8 T2 सपरिच्छदं ( for °व्ययम् ). — c ) G1 योगक्षयं ( for °क्षेमं ). Bo. 4. 5 नरः ( for च सं- ). — G3 om. ( hapl. ) 11d–14a. — d ) K4 V1 B2 Da Dn1 D2. 3 वणिजां; B5 D6 G1 वणिजा ( for °जः ). V1 Da करं; D2 करात्.

12 G3 om. 12 ( cf. v. l. 11 ). — a ) D7 T1 G2. 4 चातुवृत्तिं; D8 दानवृद्धिं ( for °वृत्तिं ). Cv as in text. — b ) D7 T1 G1. 4 फलं; Cv शिल्पं ( as in text ). D4 संवीक्ष्य; Cv संप्रेक्ष्य ( as in text ). D2. 8 T2 वासकृत् ( for चास° ). — G1 om. 12cd. — c ) K ( except K1 ) V1 B ( B1 missing ) D ( D1 missing ) T G2. 4 M4 शिल्पं; M1-3 शिल्पि- ( for शिल्प- ). K2. 3. 5 V1 B ( B1 missing ) Da Dn D2. 3. 5. 6 M1. 2. 4 एवं.

13 G3 om. 13 ( cf. v. l. 11 ). — a ) V1 न्यायान्; B3 D6 न्याया( D6 °य्या )त्; Dn दाप्या; D2. 3. 5 न्यायाः ( for न्याय्याः ). Ś1 T2 M2 उच्चावचः करा न्यायाः ( M2 °य्याः ); K1. 4 D7 T1 G2. 4 °वचाः करा न्यायाः ( G2 °य्याः ); K3 D4 °वचाः करास्त्याया ( D4 °स्त्याज्याः ); K5 Da °वचकराश्चयायात्; Bo. 2. 4 °वचकरान्दायान् ( B2 °न्पायात् ); B5 °वचकरान्यावत्; G1 M1. 3. 4 °वचाः करन्यायाः. — b ) Ś1 K1 पूर्वराज्यं; K3 D4 सदा राज्ञा; V1 Bo D6 M1-3 पूर्वं राज्ञां; Dn महाराज्ञा; D2. 3. 5 कुर्वन्राज्ञां ( D5 °ज्ञा ) ( for पूर्वराज्ञां ). K4 D6. 8 M2 युधिष्ठिरः. — c ) Ś1 महीयेरंस्; K3 V1 B2 Dn न सीदेरंस्; Da न सीदेयुस्; D7 S ( G3 om. ) न हीयेयुस् ( for न हीयेरंस् ). — d ) D2. 3. 5 कुर्वन् ( for कुर्यान् ).

14 G3 om. 14a ( cf. v. l. 11 ). — a ) Bo. 3-5 D3. 5 transp. कर्म and च. — B2 Da om. ( hapl. ) from संप्रेक्ष्य up to कर्म च ( in 14c ). — b ) D7 T G M2 तथा ( for ततः ). — c ) G1 फल-. K5 Cv निर्हेतुं; B5 D6. 7 M2 °तुर् ( for °तु ). — d ) K1 V1 B ( B1 missing ) Da D3. 5. 6. 8 किंचित्; M2 कंचित् ( for कश्चित् ). K2. 5 V1 B ( B1 missing ) Da Dn D2. 3. 5. 6. 8 संप्रवर्तते; M1. 3 °कल्पयेत् ( for °वर्तयेत् ).

15 With 15, cf. Manu. 7. 128. — a ) B3 तथा ( for यथा ). — b ) G3 भारत ( for भागिनौ ). — c ) Bom. ed. संवेक्ष्य तु ( for समवेक्ष्य ). K1 V1 Da ततो ( for तथा ). D2 राज्ञां; M1. 3 राजा. — d ) D5 प्रणये; D6 प्रणेयात्; G1 प्रणयाः ( for प्रणेयाः ). G2 गिरा ( for कराः ).

16 16ab = ( var. ) Manu. 7. 139ab. — a ) Ś1

C. 12. 3278
B 12. 87. 16
K. 12. 87. 18

नोच्छिन्द्यादात्मनो मूलं परेषां वापि तृष्णया ।
ईहाद्वाराणि संरुध्य राजा संप्रीतिदर्शनः ॥ १६
प्रद्विषन्ति प्ररिख्यातं राजानमतिखादिनम् ।
प्रद्विष्टस्य कुतः श्रेयः संप्रियो लभते प्रियम् ॥ १७
वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
भृतो वत्सो जातबलः पीडां सहति भारत ॥ १८
न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् ॥ १९
यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृपः ।
संजातमुपजीवन्स लभते सुमहत्फलम् ॥ २०
आपदर्थं हि निचयान्राजान इह चिन्वते ।
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा ॥ २१
पौरजानपदान्सर्वान्संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्वानभ्यन्तरानपि ॥ २२
बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् ।
एवं न संप्रकुप्यन्ते जनाः सुखितदुःखिताः ॥ २३

---

K2.4 नाच्छिद्याद्; K1 B4 नोच्छिंदेद्; Dn1 D3.5 नोच्छिद्याद् (for नोच्छिन्द्याद्). — [b]) K2.3.5 V1 B (except B2; B1 missing) Da Dn D2-6.8 चापि; D7 T G वाति-; M1.2 वा वि- (for वापि). — [c]) M2 कथाद्वाराणि (for ईहाद्वा°). Ca cites ईहा. K1 संरुद्ध (for °ध्य). — [d]) K2.5 V1 B (B1 missing) Da Dn D2.3.5.6 संप्रीत-; K3 संप्रति-; D4 M1.3.4 सांप्रत-; D7 T G संवृत-; M2 स्वव्रत- (for संप्रीति-). B3 -लोचनः; D6 -मानसः; T1 G3 M1.3 -दर्शिनः (for -दर्शनः). Cv as in text.

17 [a]) D4 प्रद्विष्यति; G3 M2 °षंतं (for °षन्ति). D7 T1 G2-4 M1.3.4 [अ]परिख्यातं; T2 G1 [अ]परिच्छेदं (for परिख्यातं). — [b]) K5 D7 T G2-4 M अति- (M4 इति)वादिनं; Da D3 °खादितं; G1 °पातिनं; Ca °खादिनम् (as in text). — [c]) K1 प्रतिष्ठस्य; V1 प्रद्वष्टस्य; D2.3.5.6 प्रवि°; T2 G1 प्रद्वेषस्य (for प्रद्विष्टस्य). — [d]) Ś1 Bo.3-5 D6 स प्रियो; K1 संप्रिलो; K5 Dn नाप्रियो; V1 Da स्वप्रियो; B2 D3 सुप्रियो; D2.3.5 सुश्रियो; D7 T G1.3.4 संवृतो; G2 संपृक्तो; M2 संप्रिये (for संप्रियो). K5 B5 Dn D2.3.5.8 फलं; D7 T1 G M2.4 श्रियं (G1 °यः) (for प्रियम्). M1.3 कुतो भूतिः कुतः सुखं.

18 [a]) D3-5 वत्सोपम्येन; D7 T G वत्सोपमेन; M2 वधौपम्येन; M4 वत्सेन वम्यौ (for वत्सौपम्येन). — [c]) B4 damaged; Dn2 धृतो; D7 T1 G3.4 ततो; Ca भृतो (as in text). T1 -बालः (for -बलः). — [d]) D2.3.5 पार्थिव (for भारत).

19 [b]) D2.3 Cv भृशदुग्धो; D7 S दुग्धे( T2 °ग्धा-; G1 M °ग्धो )त्यर्थ (for भृशं दुग्धो). — [c]) B4 M2 अप्रति- (for अप्यति-).

20 [b]) K2.5 V1 B (B1 missing) Dn D2.3.5.6.8 परिरक्षन्; Da परं रक्षन्; T2 G1 प्रतिगृह्य (for परि°). K4 D7 G2-4 नृप. — [c]) D4 उपजीवन्हि; D7 S °जीवानो (for °जीवन्स). — [d]) D7 S विंदते (for लभते). D7 T1 G3.4 स; T2 स्म (for सु-).

21 [a]) K3.5 V1 B (B1 missing) D (D1 missing) S (except T2 G1) Cv च (for हि). K5 नियतं; V1 B (B1 missing) Da Dn D3 m.5.6.8 Cv निर्यातं (for निचयान्). — [b]) G1 हि वि- (for इह). Dn विंदते (for चिन्वते). K5 V1 B (B1 missing) Da D3 m.5.6.8 धनं त्विह विवर्धयेत् (V1 Bo.2.4.5 D6.8 °र्धते). — [c]) D7 S ते (for च). V1 Bo.2.3.5 कोषभूतं (for कोश°). Da च (for स्यात्). — [d]) K1 कोशं; K4 कोशे; V1 B (B1 missing) कोषो (for कोशो). K3 चास्य- (for वेश्म-). D7 T G -गृहस्; M4 -गते (for -गतस्). M1.3.4 यथा (for तथा).

22 G1 om. (hapl.) 22[ab]. — [c]) Ś1 K5 Da D4.7 T G1.3 M1 यथाशक्त्या (for °शक्ति). K3 [अ]नुकंपते. — [d]) K1.4 अल्प( K4 °ल्य )तरान्; K2 Dn2 स्वल्पधनान्; K3.5 V1 B (B1 missing) D2-5.8 अल्प( K3 °न्य )धनान्; D6 एवाधनान्; D7 S अंतच( G2 °श्च )-रान् (for अभ्यन्तरान्). Da Dn1 सर्वान्स्वल्पधनाधिपः (Dn1 °नि च).

23 [a]) K3 D4 धनं (for जनं). V1 D7 T1 G2.3 Cv भोजयित्वा; G4 बोध° (for भेद°). — [b]) V1 मध्यगः (for °मः). K5 Bo.4.5 Dn2 D2.3.5.6.8 तु यः (for सुखम्). Cv भोक्तव्यं मध्यमं सुखं. — [c]) B2 च सु- (for संप्र-). K3 Dn1 D4 एवं नास्य प्रकुप्यंति (D4 °त); K5 V1 Bo.3-5 Da Dn2 D2.3.5.6.8 एवं न संतः कुप्यंति. — [d]) D6 सुखिन-; Cv सुखित- (as in text).

प्रागेव तु करादानमनुभाष्य पुनः पुनः ।
संनिपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् ॥ २४
इयमापत्समुत्पन्ना परचक्रभयं महत् ।
अपि नान्ताय कल्पेत वेणोरिव फलागमः ॥ २५
अरयो मे समुत्थाय बहुभिर्दस्युभिः सह ।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् ॥ २६
अस्यामापदि घोरायां संप्राप्ते दारुणे भये ।
परित्राणाय भवतां प्रार्थयिष्ये धनानि वः ॥ २७
प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये ।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥ २८
कलत्रमादितः कृत्वा नश्येत्स्वं स्वयमेव हि ।
अपि चेत्पुत्रदारार्थमर्थसंचय इष्यते ॥ २९
नन्दामि वः प्रभावेन पुत्राणामिव चोदये ।
यथाशक्त्यनुगृह्णामि राष्ट्रस्यापीडया च वः ॥ ३०
आपत्स्वेव च वोढव्यं भवद्भिः सद्गवैरिव ।
न वः प्रियतरं कार्यं धनं कस्यांचिदापदि ॥ ३१
इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद्युगमादाय कालवित् ॥ ३२

C. 12. 3295
B. 12. 87. 34
K. 12. 87. 34

24 $^a$) $D_4$ नु (for तु). $K_2$ वरादानम्; $K_{3-5}$ $V_1$ B ($B_1$ missing) Da Dn $D_{2-6.8}$ $M_2$ धनादानम्; $D_7$ T G $M_{1.3.4}$ धनादानाद् (for करादानम्). — $^b$) $K_5$ $V_1$ B ($B_1$ missing) Da Dn $D_{2.3.5.6.8}$ ततः (for the first पुनः). — $^c$) $K_4$ सु- (for स्व-). $D_7$ S संनिपात्य ($M_{1.3}$ °त्यं) स्वविषयं. — $^d$) $K_1$ राष्ट्रं प्र-; $Bo_{3-5}$ $D_{2.3.5.8}$ राष्ट्रेषु; Da शब्दे प्र- (for राष्ट्रे प्र-). $D_6$ प्रवर्तयेत् (for प्रदर्श°).

25 $^a$) M सेयम् (for इयम्). $Bo_5$ समापन्ना (for समुत्पन्ना). — $^b$) $D_8$ वैरि- (for पर-). Da $D_4$ -भयान् (for -भयं). $D_4$ स ह; $T_1$ ततः (for महत्). — $^c$) $K_5$ $V_1$ B ($B_1$ missing) Da Dn $D_{2.3.5.6.8}$ चां($D_5$ दां)ताय (for नान्ताय). $K_5$ $Bo_{3-5}$ Dn $D_{6.8}$ कल्पंते; $G_4$ कल्प्येत (for कल्पेत). — $^d$) $K_{3.5}$ $Bo_{3-5}$ Dn $D_{2-6.8}$ $M_2$ फलागमाः (for °गमः).

26 $^a$) $D_7$ $T_1$ $G_{3.4}$ $M_2$ मां; $T_2$ $G_{1.2}$ $M_{1.3.4}$ मा (for मे). — $^b$) M बलिभिर् (for बहुभिर्). — $^c$) $D_7$ $T_1$ $G_{2.3}$ भृशम् (for इदम्). $M_2$ आत्मा (for आत्म-). — $^d$) $G_4$ (before corr.) बोधितुं (for बा°).

27 $^a$) Da तस्याम् (for अ°). — $^b$) $G_1$ दारुणो. — $K_1$ reads $27^{cd}$ twice. — $^c$) $K_{2.3.5}$ $V_1$ $Bo_{3-5}$ Da Dn $D_{2.3.5.6.8}$ भवतः; $K_4$ °ता (for °तां). $K_1$ (second time) प्रतिदास्ये च भवतां. — $^d$) $K_5$ $Bo_{2.4.5}$ Da $D_{2.3.5-8}$ $T_1$ $G_{2-4}$ $M_{1.3}$ धनानि च; $M_2$ °धिप (for °नि वः).

28 $D_6$ om. 28. — $^a$) $K_1$ परि- (for प्रति-). $D_7$ T $G_{2-4}$ M -प्रदास्ये ($G_4$ °स्य); $G_1$ -पद्यस्व (for -दास्ये च). $D_{2.4}$ भवता. — $^b$) $D_7$ S (except $G_2$) सर्वथा- ($T_2$ °दा-; $G_1$ °धा)हं (for सर्वं चाहं). $G_1$ भव-; $M_1$ भयं (for भय-). — $^c$) $M_4$ प्रतियास्यंति. — $^d$) $G_2$ बंधयेयुर् (for यद्धरे°). Bo Da $G_1$ बलार्दिताः (Bo °तः); $M_2$ बलोदिताः (for बलादितः).

29 $^a$) $M_{1.3.4}$ कळत्रम्. $Ś_1$ $K_4$ अग्रतः कृत्वा; $D_7$ $T_2$ G $M_{1.3.4}$ आदि($D_7$ $G_{2-4}$ °दिं)कृत्वा च; $T_1$ आदिकं कृत्वा (for °तः कृत्वा). $M_2$ कलत्रमपि मत्वा च. — $^b$) $Dn_2$ छप्स्येत् (for नश्येत्). $Ś_1$ $K_{1.4.5}$ स (for (for स्वं). $K_3$ $Da_2$ $Dn_1$ $D_4$ सर्वं वो विनशेदिति; $D_7$ सर्वस्वमपि कथ्यते; S सर्वस्वं ($M_4$ °र्वं सं-) विनशेदपि. — $^c$) $D_7$ S शरीर- (for अपि चेत्).

30 $^a$) $K_2$ यः; $Bo_2$ च (for वः). $K_5$ Dn $D_{2.6}$ प्रभावेण. — $^b$) $B_2$ रोदये. ❀ Cv: वोदये । वो युष्माकमुत्कर्षे । आर्षः संधिः । ❀ — $^c$) $K_5$ $B_2$ $D_{2.3.5.8}$ $M_4$ यथाशक्त्या (for °शक्ति). Dn [उ]प- (for [अ]नु-). — $^d$) $D_7$ $T_1$ $G_{1.3.4}$ राज्यस्य (for राष्ट्रस्य). $D_{2.3.5}$ [अ]पीडया वचः; $D_7$ S °नाय च (for °या च वः).

31 $^a$) $G_{1.2}$ आपत्स्वेवं ($G_2$ °त्स्विव). $D_{3.5}$ $G_3$ च ($G_3$ नि-) बोधव्यं; $D_7$ $T_1$ $G_{2.4}$ M नि(M हि)वोढव्यं; $T_2$ हि दातव्यं; $G_1$ अनुग्राह्यो (for च वोढव्यं). — $^b$) $K_{2.4.5}$ $V_1$ B ($B_1$ missing) Da Dn $D_{2.3.5.6.8}$ Cv पुंगवैरिव; $D_7$ S संगतैरिह ($M_{1.3}$ °व) (for सद्गवैरिव). Ca cites सद्ग(v. l. पुंग)वैः. — $^c$) $K_{3.5}$ Dn $D_4$ च (for वः). $M_2$ प्रतिभयं (for प्रियतरं). $V_1$ B ($B_1$ missing) Da $D_{2.3.5.6.8}$ न प्रियं सततं कार्यं.

32 $^b$) $K_4$ Da $D_5$ चोपचारया (for सोप°). — $^c$) $D_5$ सुरभीन्; $D_7$ सुरक्ष्मीन् (for स्वरश्मीन्). $K_{1.4}$ अत्यवसृजेद्; Bo अभ्यवि°; $D_6$ °वतजेद्; S अप्यवसृजेद् (for अभ्यव°). $D_3$ (also as in text) स्वराष्ट्रीयानवसृजेद्. Cv as in text. — $^d$) $K_{2.3.5}$ $V_1$ B ($B_1$ missing) D (except $D_4$; $D_1$ missing) T G $M_2$

C. 12. 3295
B. 12. 87. 34
K. 12. 87. 35

प्रचारं भृत्यभरणं व्ययं गोग्रामतो भयम् ।
योगक्षेमं च संप्रेक्ष्य गोमिनः कारयेत्करान् ॥ ३३
उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः ।
तस्मात्तेषु विशेषेण मृदुपूर्वं समाचरेत् ॥ ३४
सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः ।
गोमिनां पार्थ कर्तव्यं संविभागाः प्रियाणि च ॥ ३५
अजस्रमुपयोक्तव्यं फलं गोमिषु सर्वतः ।
प्रभावयति राष्ट्रं च व्यवहारं कृषिं तथा ॥ ३६
तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान्संप्रणयन्मृदून् ॥ ३७
सर्वत्र क्षेमचरणं सुलभं तात गोमिभिः ।
न ह्यतः सदृशं किंचिद्धनमस्ति युधिष्ठिर ॥ ३८

इति श्रीमहाभारते शान्तिपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

योगम् ( for युगम् ). K2. 3. 5 V1 B ( B1 missing ) D ( except D7; D1 missing ) आधाय; T2 G1 आस्थाय (for आदाय).

33 a) K1. 3 प्रचार-; K4 प्राचारं; K5 Dn1 D8 प्राकारं; Da प्रवारं; Dn2 D6 प्रधान-; G2 आचार- (for प्रचारं). — b) K2. 4. 5 V1 B ( B1 missing ) Da Dn D2. 3. 5. 6. 8 संग्रामतो; D4 ग्रामतवो ( for गोग्रामतो ). — c) Bo. 5 ( marg. as in text ) संग्रामं ( for संप्रेक्ष्य ). — d) K4 गोपिनः; Ca. v गोमिनः ( as in text ). K5 V1 B ( B1 missing ) Da Dn1 D2. 3. 5. 6. 8 करं ( for करान् ).

34 a) K1 उपेक्षिताश्च; D2. 3. 5 G1 °तानि; D6 °क्ष्यता हि; D7 G3 °क्षिताभि- ( for °क्षिता हि ). D7 T G2–4 M गच्छेयुर् ( for नश्येयुर् ). — b) K4 गोपिनो; D6 गोमिना. D4 -चारिणः ( for -वासिनः ).

35 a) M1–3 सांत्वेन. K3 नामम् ( for दानम् ). D7 T G M4 सांत्वेनावेक्ष( T1 °वेष-; M4 °रक्ष )णं दानम्. — b) D6 अवस्थां च; D7 T1 G3 अपेक्षो वा; G1. 4 M1. 3. 4 अवेक्षा च ( for अवस्था च ). Dn1 चाभ्य- ( for चाप्य- ). — c) Ś1 K1 गोमिना; G1 गोमिता; M1. 3 गोमिनः ( for °नां ). B2 यच्च; Da प्रति- ( for पार्थ ). K2. 3 V1 Bo. 3–5 Dn D2–5. 7 T G कर्तव्यः; M °व्याः ( for °व्यं ). — d) K1. 5 V1 B ( B1 missing ) Dn D2–8 T G संविभागः ( for °भागाः ). Da कृतानि ( for प्रियाणि ).

36 a) M2 अपि ( for उप- ). D7 S -भोक्तव्यं ( for -योक्तव्यं ). — b) V1 B2 Da गोमिनि ( for गोमिषु ). K3. 5 V1 B ( B1 missing ) Da D2–8 S सर्वशः; Dn भारत ( for सर्वतः ). — c) K2. 3 V1 Dn1 T2 M2 प्रभावयंति ( for °यति ). — d) D7 T1 G व्यवहार- ( for °हारं ). G1 -कृतं ( for कृषिं ).

37 b) Bo. 4 प्रियं ( for प्रीतिं ). — d) K3 V1 Bo. 2–4 Da Dn D2–5. 7. 8 T G M1–3 संप्रणयेन् ( for °यन् ). K5 Bo. 3. 4. 5 ( marg. as in text ) D2. 3. 5. 7. 8 T G M4 मृदुः; Dn1 गुरून् ( for मृदून् ).

38 a) M सर्वतः ( for °त्र ). V1 क्षेमकरणं ( for °चरणं ). — b) Dn D6. 8 नाम ( for तात ). Da D4 गोमिनि; Dn °षु ( for °भिः ). — G2 om. 38cd. — c) M4 ह्यमूः ( for ह्यतः ). — d) K2. 3 Dn1 D4. 6. 8 वरम् ( for धनम् ).

Colophon : B1 D1 missing. — *Sub-parvan* : Ś1 K V1 Bo. 2–5 Da Dn D2–6 T G1. 2. 4 M राजधर्म. — *Adhy. name* : M1–3 राष्ट्रगुप्तिर्. — *Adhy. no.* ( figures, words or both ): K3 Da Dn 87; K5 D7 S 89; B3. 4 86; D8 84. — *Śloka no.* : Dn1 40; Dn2 41.

# ८९

युधिष्ठिर उवाच ।
यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते ।
कथं प्रवर्तेत तदा तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
यथादेशं यथाकालमपि चैव यथाबलम् ।
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः ॥ २
यथा तासां च मन्येत श्रेय आत्मन एव च ।
तथा धर्म्याणि सर्वाणि राजा राष्ट्रे प्रवर्तयेत् ॥ ३
मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न विपातयेत् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥ ४
जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिप ।
व्याघ्रीव च हरेत्पुत्रमदष्ट्वा मा पतेदिति ॥ ५

C. 12. 3306
B. 12. 88. 5
K. 12. 88. 5

## 89

☞ B1 D1 are missing for this adhy. ( cf. v. l. 12. 83. 24 and 79. 28 ).

1 D8 om. the ref. — a) M1. 3. 4 समस्थो॰. — b) V1 B ( B1 missing ) D3. 5. 6 कोषार्थी; T1 कोशार्थ॰; G1 कोशाढ्ि॰. D6 महीपते ( for महामते ). — c) D7 T G करः ( for तदा ). K3 कथं तदा प्रवर्तेत.

2 D8 om. the ref. — b) K3 Dn D4 यथाबुद्धि ( Dn1 ॰द्धिं ); B5 G2 अपि चैवं ( for अपि चैव ). K1 यथाफलं; D4 बलाबलं ( for यथा॰ ). — c) D2. 3. 5 अनुशिक्ष्या( D5 ॰क्षा )त् ( for ॰शिष्यात् ). V1 B2–4 Da D2. 3. 5. 6. 8 राजन् ( for राजा ). — d) Ś1 धर्मार्थे; D7 S ( except M1. 3 ) धर्मात्मा.

3 a) K5 V1 B ( B1 missing ) Da Dn D2. 3. 5. 6. 8 थ( K5 V1 Dn2 त )थैवासां ( for यथा तासां ). — b) M transp. श्रेय and आत्मनः. B6 Da D2. 3. 5 आत्मानम् ( for आत्मन ). — c) K1 G2 यथा ( for तथा ). K4 D4 T G1 धर्माणि; K5 V1 B ( B1 missing ) Da Dn D6. 8 कर्माणि; D2. 3. 5. 7 G2–4 M4 सर्वाणि ( for धर्म्याणि ). D2. 3. 5 M4 कर्माणि; D7 T1 G2–4 धर्माणि ( for सर्वाणि ). — d) D7 S ( except G1 ) transp. राजा and राष्ट्रे. K3. 5 V1 B ( B1 missing ) Da Dn1 D2. 3. 5. 6. 8 राजा राष्ट्रेषु वर्तयेत्.

4 a) D2. 3. 5 मधुदोग्धं. Ś1 K1. 4 पिबेद् ( for दुहेद् ). Cv मधुदोहं दुहेद् ( as in text ). — b) K3 निपातयन्; Da D7 S प्रपात( T2 ॰ताप )येत् ( for विपा॰ ). K4. 5 V1 B ( B1 missing ) Dn D2. 3. 5. 6. 8 भ्रमरा इव पादपं. — c) G1 वत्सापेक्ष॰. Da चापि ( for चैव ). — d) K1 वत्साश् ( for स्तनांश् ). G2–4 चापि ( for च न ). K5 विधुट्टयेत्; Da विकुद॰; D4 निषूद॰; G2–4 न कुट्ट॰; Ca विकुट्ट॰ ( as in text ).

5 a) Ś1 K1. 2 जलौको( K1 ॰क )वत्; K4 ॰के च; K5 Dn2 D6–8 T2 ज( D8 अ )लूकावत्; T1 G M जलूका( G1 ॰क )वत् ( for जलौका॰ ). G1 विभेद् ( for पिबेद् ). — b) G1 मृदुनेव; G2 मृदु चैव. K2. 3. 5 V1 B ( B1 missing ) Da2 Dn D1–3. 5–8 T G M4 नराधिपः. — c) G4 व्याघ्रीं वा ( for व्याघ्रीव ). D7 G2–4 [अ]पि वहेत्; T G1 M [अ]पहरेत् ( for च ह॰ ). K5 V1 B ( B1 missing ) Da Dn D2–6. 8 पुत्रान् ( for पुत्रम् ). — d) Ś1 ( before corr. ) K2. 4 अदष्ट्वा मा; K1 D4 अ( D4 आ )दंष्ट्रा मा; K3 मदंष्ट्रा मा; K5 V1 B ( B1 missing ) Da Dn D8 संदशेन्न; D2. 3 संदंशेन; D5. 6 संदेशेन ( D6 ॰न्न ); D7 अदंशेन्न; T G3. 4 M2 न दं( M2 द )शेन्न; G1 अदशन्न; G2 न दंशं न; M1. 3 न दशन्न; M4 न द*न्ने ( for अदष्ट्वा मा as in Ś1 by corr. ). K5 V1 B ( B1 missing ) Da Dn D2. 3. 5–8 S च पीडयेत् ( M1. 3. 4 ॰यन् ) ( for पतेदिति ). ❀ Ca : व्याघ्री पुत्रान्दशंत्यपि न पीडयति । ❀ — After 5, all MSS. ( except Ś1 K1. 2. 4 D4; B1 D1 missing ) ins. :

212* यथा शल्यकवानाखुः पदं धूनयते सदा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ।

[ ( L. 1 ) D3 ( marg. as above ). 5 शल्यकवालाखुः. K3 यथान्नपालस्त्रीभाकाममाखुः पादं त्वचा यथा ( sic ); D7 S यथा विलेखकः कर्ण( T2 च लेखकः पर्ण- ; G1 M4 च लेखकः कर्ण- ; G2 बिडालकः कंठ- ; M1 चेलपकः कर्ण- ; M2. 3 बलेबकः कर्ण )माखुः पादत्वचं यथा. — ( L. 2 ) B2. 5. ( marg. as above ) अभीक्ष्णेन. K5 V1 B ( B1 missing ) Da D2. 3. 5. 6. 8 [अ]प्यपायेन ( for [अ]भ्यु॰ ). D7 ( marg. as above ) G2 तदा ( for तथा ). T1 सदा ( for समा॰ ). ]

6 D4 om. 6ab. — a) Ś1 K2. 4 स्वल्पेन. D2. 3. 5

C. 12. 3308
B. 12. 88. 7
K. 12. 88. 7

अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः कामं वृद्धिं समाचरेत् ॥ ६
दमयन्निव दम्यानां शश्वद्भारं प्रवर्धयेत् ।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥ ७
सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः ।
उचितेनैव भोक्तव्यास्ते भविष्यन्ति यत्नतः ॥ ८
तस्मात्सर्वसमारम्भो दुर्लभः पुरुषव्रजः ।
यथामुख्यान्सान्त्वयित्वा भोक्तव्य इतरो जनः ॥ ९
ततस्तान्भेदयित्वाथ परस्परविवक्षितान् ।
भुञ्जीत सान्त्वयित्वैव यथासुखमयत्नतः ॥ १०
न चास्थाने न चाकाले करानेभ्योऽनुपातयेत् ।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥ ११
उपायान्प्रब्रवीम्येतान्न मे माया विवक्षिता ।
अनुपायेन दमयन्प्रकोपयति वाजिनः ॥ १२
पानागाराणि वेशाश्च वेशप्रापणिकास्तथा ।
कुशीलवाः सकितवा ये चान्ये केचिदीदृशाः ॥ १३
नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः ।
एते राष्ट्रे हि तिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः ॥ १४

---

[अ]नेन (for the second [अ]ल्पेन). — $^{b}$) V1 प्रवर्धयेत् (प्रदाप°). — $^{d}$) K4. 5 B2 Da Dn D6. 7 S क्रम- (for कामं). D5 समावदेत् (for °चरेत्).

7 $^{a}$) K1 दमवन्; D8 °यान्. K5 V1 B (B1 missing) Da Dn D2. 3. 5. 6. 8 G2 दम्यानि (for °नां). — $^{b}$) K5 Bo. 4. 5 Da D3. 5 T2 शश्वद्भावं; G3 °त्पातं (for °द्भारं). K3 Dn D4 T G विवर्धयेत्; K5 V1 B3 Da D2. 3. 5 प्रवर्त°; D7 प्रवृद्ध° (for प्रवर्ध°). — $^{c}$) V1 B (B1 missing) Da D2. 3. 5. 6. 8 मृदुनापि; Dn1 M4 °पूर्व-. — $^{d}$) D7 S पाशम्. V1 Da T2 G2 M1. 3. 4 अभ्यवतारयेत्; D7 T1 G1. 3. 4 M2 °कारयेत् (for °हारयेत्).

8 $^{a}$) D7 T1 G2–4 असत्; T2 G1 सम्यक् (for सकृत्). V1 B2 Dn2 D8 T2 G1 -तीर्णास्ते (T2 °स्तु) (for -कीर्णास्ते). M सकृत्पाशविनीतास्ते. — $^{b}$) K1 मानवाः; V1 Da दुर्गमाः; T2 G1 M4 दुर्मदाः (for दुर्दमाः). D7 T1 G2–4 भविष्यंति हि दुर्मदाः. — $^{c}$) V1 B (B1 missing) Da D2. 3. 5. 6. 8 [अ]पि; D4 [इ]व (for [ए]व). — $^{d}$) K1 यंत्रतः (sic); K4 Da D4. 6. 7 S [अ]यत्नतः (for यत्नतः).

9 $^{a}$) Ś1 K3 T G1. 3 सर्वसमारंभाद्; K1. 4 D7 G4 M सर्व(K1 °र्वे)समारंभा. — $^{b}$) D3 दुर्लभं. K5 V1 B (B1 missing) Da Dn D2. 3. 5. 6. 8 पुरुषं प्रति; D7 T2 G °षः प्रजाः (for °षव्रजः). M दुर्लभाः पुरुष(M1. 3 °षं)व्रजाः. — $^{c}$) Bo. 3. 4. 5 (marg. as in text) D2. 3. 5. 6. 8 यथामुख्यं; M2 तथा मुख्यान्. Ca cites मुख्यान्. — $^{d}$) K4 V1 Bo इतरे; Ca इतरो (as in text). V1 Bo Dn2 जनाः. K1 B4 Dn1 D7 S भोक्तव्या इतरे जनाः.

10 $^{a}$) D7 भोजयित्वा (for भेद°). V1 B2 Da च; Dn तु; D2 lacuna (for [अ]थ). — $^{b}$) B2 Da Dn1 -विविक्षितान्; D2 -विलक्षि°; D4 -विलक्षणात्; D7 T1 G -विवि(G1. 2 °व)र्जितान्; Ca विवक्षि° (as in text). — $^{c}$) K3 सांत्वयेच्चैव; K5 B3 Dn °यंश्चैव; V1 B2 शांत्वयित्वे(B2 °त्वै)व; Bo सांत्वयित्वेव; D2. 3. 5 °त्वैवं; D7 T G °त्वेह. — $^{d}$) D7 T1 G2–4 यथाकालम् (for °सुखम्).

11 $^{a}$) D6 वा (for the first च). D3 [अ]स्थानं; M2 स्थाने. K5 V1 Bo. 3–5 Da D5. 6. 8 न चा(D6 वा)-कालं; D2 वा न काले (for न चाकाले). — $^{b}$) K3 Da Dn तेभ्यो (for एभ्यो). K2 न पातयेत्; K3–5 B (B1 missing) Dn D2–8 T G M1. 3. 4 निपा°; V1 [ऽ]भिपा°; M2 [ऽ]तिपा° (for ऽनुपा°). — $^{c}$) K1. 4. 5 Bo. 3 Da D2–5 M4 आनुपूर्वेण; Ca °र्व्येण (as in text). V1 B2 शांत्वेन.

12 $^{a}$) D5 उपायाः. V1 Bo. 2 m. 3 D3 M [ए]नान्; B2 [अ]न्यान् (for [ए]तान्). — $^{c}$) Ś1 K1. 2. 4 D4 अनुकालेन; D6 °पादेन (for °पायेन). T1 G2 नमयन् (for दम°). — $^{d}$) D7 T1 G वा जनं; T2 वाजिनं.

13 $^{a}$) Ś1 K1. 4 वेशांश्च; K2 वेश्याश्च. K3. 5 V1 B (B1 missing) D (D1 missing) S पानागार(M2 °रं)-निवेशा(V1 °श्या-; T2 G M1. 3. 4 °शां)श्च. — $^{b}$) K5 V1 B2. 5 Da Dn D6 वेश्याः; Bo. 4 D2–5. 8 देश-; B3 वैश्याः (for वेश-). Ś1 K2. 4 वेशप्रापणिकोन्मुखान्; K1 वेशप्रापणिकांदुखान् (sic); D7 T2 वेशान्प्रा(T2 देशप्रा)-पणिकांस्तथा; M वि(M2 नि)रुद्धापणिका(M4 °कां)स्तथा. — $^{c}$) K4 कुशीलवान्. Dn2 D3 संकितवा. D7 T2 G1. 2 M1–3 कितवाः कुशीलवाश्चैव (hypermetric); T1 G3. 4 M4 कितवान्कुशीलवांश्चैव (hypermetric).

14 $^{a}$) K1 नियमाः. — $^{b}$) K5 V1 B1. 5 D2. 3. 5. 8

# १०२

C. 12. 3733
B. 12. 101. 1
K. 12. 101. 1

युधिष्ठिर उवाच ।
किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत ।
किंसंनाहाः कथंशस्त्रा जनाः स्युः संयुगे नृप ॥ १
भीष्म उवाच ।
यथाचरितमेवात्र शस्त्रपत्रं विधीयते ।
आचारादेव पुरुषस्तथा कर्मसु वर्तते ॥ २
गान्धाराः सिन्धुसौवीरा नखरप्रासयोधिनः ।
आभीरवः सुबलिनस्तद्बलं सर्वपारगम् ॥ ३
सर्वशस्त्रेषु कुशलाः सत्त्ववन्तो ह्युशीनराः ।
प्राच्या मातङ्गयुद्धेषु कुशलाः शठयोधिनः ॥ ४
तथा यवनकाम्बोजा मथुरामभितश्च ये ।
एते नियुद्धकुशला दाक्षिणात्यासिचर्मिणः ॥ ५

---

D7 S क्ष्वेळान्कि( T1 °ळाकि )लिकिलाशब्दान्. — b) Ś1 कूकून्वै; K1 कूकून्वै; K2 कून्कून्वै; K3 V1 क्रकचा; K4 क्रकन्वा; Da क्रकचो; Dn2 ककचा; D2. 3. 5. 6 मृकु( D6 °गु )टी; D7 G3. 4 कृतकान्; D3 क्रवचा; T G2 M1. 3. 4 क्रकरान्; G1 ककरान्; M2 कृतरान् ( for क्रकचा ). K3. 5 V1 B Da Dn D2. 3. 5. 6. 8 गोवि( D6 °वृ )षाणिकाः; D7 S गोविषाण( G1 °वृषान-; M2 °वृषाण )-कान्; D4 शंषांश्चोबविषाणिकाः ( sic ). — d) K5 B4. 5 D8 वादयेयुस्( for नाद° ). B3 Dn1 पुरश्चरान्; D7 T G च झर्झरान् ( for च कुञ्ज° ).

Colophon : D1 missing. — *Sub-parvan :* Ś1 K V1 B Da Dn D2–7 T2 G1. 2. 4 M राजधर्म. — *Adhy. name :* Ś1 K1. 2. 4 सेनानीतिरभिया( K1 °धा )नविधिः; K3 B Da1 D2–6 सेनानीतिः; V1 विजिगीषमाणवृत्ते सेनानीतिः; Da2 सेनाधिपतिः; M1–3 सेनानीत्यां योधर्षणं ( M2 °द्धर्षणं; M3 °धहर्षणं ). — *Adhy. no.* ( figures, words or both ): K5 103; B3. 4 Dn1 99; Da1 101 ( as in text ); Da2 Dn2 100; D7 S 102; D8 96. — *Śloka no. :* Dn 50.

## 102

☞ D1 is missing for this adhy. ( cf. v. l. 12. 79. 28. ).

1 D8 om. the ref. — a) K5 Bo. 3–5 Dn D2. 3. 5. 6. 8 किंसमाचाराः ( D6 °रः ) ( for °मुत्थानाः ). — b) T1 G2–4 कथंशीलाश्च ( for °रूपाश्च ). — c) D8 कथंशाखा. — d) Dn M2 संगरे ( for संयुगे ). K4 D4 M2 नृपः; Dn क्षमाः; T1 G नृपाः.

2 D8 om. the ref. — a) V1 तथा-; D8 अथ ( for यथा- ). — b) K ( except K4 ) B ( except B2 ) Dn D2. 3. 5. 6. 8 शस्त्रं ( for शस्त्र- ). V1 B2 Da -यंत्रं ( for -पत्रं ). — c) Bo. 1. 3–5 D2. 3. 5. 6. 8 आच( D6. 8 °चा )रन्; B2 M2 आचारान् ( for °राद् ). K3. 5 V1 Bo. 1. 3–5 Dn D2–6. 8 M2 वीर-; B2 वीक्ष्य; D7 T G M1. 3. 4 हीह ( for एव ). K1 आचणुद्दी*पुरुषस् ( sic ); Da अचाराद्वीयपु°. — d) K5 धर्मेण; Bo. 3–5 D2. 3. 5. 6 धर्मेषु; D8 धर्मे स ( for कर्मसु ). Da2 वर्तितः. B1 तथा धर्मः प्रवर्तते. — After 2, D4 ins. :

238* आदानार्थाय पुरुषैस्तथा कर्म विधीयते ।

3 b) B3 -प्राश- ( for -प्रास- ). — c) K2. 3. 5 V1 B D ( D1 missing ) T G3 M2 अभीरवः; G2 अभीतवत्; G4 आभीराश्च. K3 D4 च बलिनस् ( for सुब° ). — d) K3 D4 तंगणाः सर्वपारगाः.

4 V1 reads 4 on marg. — a) D8 पूर्व- ( for सर्व- ). K1 -शास्त्रेषु; Da -युद्धेषु; Dn2 -सत्त्वेषु; D4 -तंत्रेषु. — b) V1 D7 T1 G2–4 शस्त्रवंतो; D2. 3. 5. 6 सत्य° ( for सत्त्व° ). D2. 6 ह्युशीनराः. — c) B1 -कुशलाः; G2. 3 -कल्पेषु ( for -युद्धेषु ). — d) B1 पुरुषाः ( for कुशलाः ). K4 M शस्त्र-; K5 V1 B Da Dn D2. 3. 5. 6. 8 G2 कूट-; T2 शूर- ( for शठ- ).

5 a) V1 जवन-; D4 युवन- ( for यवन- ). K1. 4 D7 T2 -कांभोजा. — b) Dn1 D7 T1 G1. 3. 4 M2–4 मधुराम् ( for मथु° ). D7 T1 G2–4 आहिताश्; M2 अदितश् ( for अभितश् ). — c) Ś1 ( *sup. lin.* as in text ) K1. 2. 4 एतेषु; K3 T G1 M2–4 एतेश्च-; D4 एतेस्त्र-; D7 ये ते च; G2 ते तेश्च-; G3. 4 M1 एते च; Ca. n एते नि- ( as in text ). B4 D4 -युद्धे ( for -युद्ध- ). — d) Ś1 K1. 4 °त्याश्च ( for °त्यासि- ). K1 चर्मिणाः ( sic ); K2. 5 V1 B Da Dn D2. 3. 5. 6. 8 -पाणयः; K3 D4 -चर्मणि; T1 G2 -चर्मणः. ❀ Cn : दाक्षिणात्या[ः] असिपाणय इति च्छेदः । ❀

सर्वत्र शूरा जायन्ते महासत्त्वा महाबलाः ।
प्राय एष समुद्दिष्टो लक्षणानि तु मे शृणु ॥ ६
सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः ।
पारावतकुलिङ्गाक्षाः सर्वे शूराः प्रमाथिनः ॥ ७
मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथापरे ।
प्रवादिनः सुचण्डाश्च क्रोधिनः किंनरीस्वनाः ॥ ८
मेघस्वनाः क्रुद्धमुखाः केचित्करभनिस्वनाः ।
जिह्मनासानुजङ्घाश्च दूरगा दूरपातिनः ॥ ९
बिडालकुब्जास्तनवस्तनुकेशास्तनुत्वचः ।
शूराश्चपलचित्ताश्च ते भवन्ति दुरासदाः ॥ १०
गोधानिमीलिताः केचिन्मृदुप्रकृतयोऽपि च ।
तुरंगगतिनिर्घोषास्ते नराः पारयिष्णवः ॥ ११
सुसंहताः प्रतनवो व्यूढोरस्काः सुसंस्थिताः ।
प्रवादितेन नृत्यन्ति हृष्यन्ति कलहेषु च ॥ १२

C. 12. 3744
B. 12. 101. 12
K. 12. 101. 13

---

6 After $6^{ab}$, D7 S ins.:

239* आवन्तिका महाशूराश्चतुरङ्गे च माळवाः ।
एकोऽपि हि सहस्रस्य तिष्ठत्यभिमुखो रणे ।

[ (L. 1) D7 चतुर्दंताश् ; M1. 3. 4 चा( M4 च )तुर्दंते (for चतुरङ्गे). ]

— $^{c}$) B1 शूराश् (for प्राय). K1. 5 V1 Bo. 2–5 Da Dn D2. 3. 5. 6. 8 एव; B1 चैव; D7 S (except M2) देशाः (M1. 3. 4 देशः) (for एष). K5 V1 B Da Dn D2. 3. 6–8 T G समुद्दिष्टा; D5 समादिष्टा. — $^{d}$) Da1 Dn2 लक्षणानिति (sic) (for °नि तु). K3. 4 D4. 7 S (except T2) च (for तु).

7 $^{a}$) K3 D4 -नेत्राश्च; K5 -वाङ्मात्राः; B1 -निर्घोषाः; D5 -वाद्देशाः (for -वाङ्नेत्राः). — $^{c}$) Ś1 पारावततुलिंगाक्षाः; K1 °त्रलिंगाक्षाः; K2. 3 D4 °सु( K2 °फु )-लिंगाक्षाः (D4 °ख्या); B1 °कुलंगाक्षाः; B2 °कुलीराक्षाः; Da °कुलंदाक्षाः (Da2 °क्षाः); D2. 8 (before corr. as in text) °कुलिंदाख्याः; Cnp °कुलिंदाक्षाः. — $^{d}$) K3 सर्वे शूलाः; Da सर्वशूराः; D6 सर्वेश्वराः. Bo. 1. 5 D2. 3. 5. 6 प्रमादिनः; D7 M4 °धिनः; D8 °थिनाः; T1 प्रतापिनः.

8 $^{a}$) K1. 2 मृगस्वना; D5 भृंगस्वरा (for मृग°). D6 द्वीपनेत्रा. D4 मृगराड्द्वीपिनेत्राश्च. — $^{b}$) D7 T G वृषभा( G3 °ळा )क्षास् (for ऋष°). K5 V1 Dn तरस्विनः (K5 °नाः); B Da D3. 5. 6. 8 मनस्विनः (for तथापरे). — K5 om. (hapl.) $8^{cd}$. — $^{c}$) V1 Bo–3. 5 Da Dn D2. 3. 5–8 प्रमादि( D2 °दी )नश्; B4 D7 S प्रमाथि( D7 °धि )नश्; D4 अयादिनश्. K1 च चर्मश्च; K2. 3 V1 B Da Dn D4. 7 S च मंदाश्च; D2. 3. 5. 6 च मंदाक्षाः; D8 च मल्लाश्च. K4 प्रमादिताः प्रतनवो. — $^{d}$) K3 V1 B D (D1 missing) S क्रोधनाः. K1 किंकरीस्वनाः; K3 किंकणी°; V1 B D (D1 missing) S किंकिणीस्वनाः (B1 °णीस्वराः; D6 °णीशब्दाः; G1 °णिस्वनाः).

9 K3 om. (hapl.) $9^{ab}$. B5 reads $9^{ab}$ on marg. — $^{a}$) V1 B3 D4. 8 मेघस्वराः; G3 °वर्णाः. K2 क्रतुमुखाः; K5 V1 B Da Dn D2. 3. 5. 8 क्रोधमुखाः (B1 °मनाः); D7 S क्रूर° (for क्रुद्ध°). — $^{b}$) K5 Dn केचित्करभसंनिभाः; D7 T G °च कळनिस्वनाः. — $^{c}$) K1 -जंघश्च. K2 B1. 4 जिह्मनासानुजिह्वाश्च; K3 जिह्मनास्यजंघाश्च; K4 °सा सुजंगाश्च; K5 °साग्रजंघाश्च; V1 Bo. 3. 5 Dn D2. 3. 5. 6 °साग्रजिह्वाश्च; Da °सांडि( Da2 °ड )जिह्वाश्च; D4 M4 °साणुजंघाश्च; T2 °साः सुजंघाश्च; G2 °साश्च मेघाश्च. — $^{d}$) K5 -तापिनः; Da -गामिनः (for -पातिनः).

10 $^{a}$) K5 B (except B2) Dn1 D2. 3. 5. 6. 8 बिडालकुब्ज-; D4 °कुब्रास्; M बिलाळकुब्ज- (M2 °ब्जास्). D7 T G बिलाळ( T1 बिलाट )कुब्जास्तब्धाक्षा. K3 reads बिडालकुब्जास्तथापरे (cf. $8^{b}$) and om. the rest of the stanza. — $^{b}$) M4 तनुकेशस्. M2 तनुत्यजः (for °त्वचः). — $^{c}$) K5 V1 B D (D1 missing) T G1. 3. 4 M शीघ्राश्; G2 शीलाश् (for शूराश्). Ś1 (orig.) चाचलचित्ताश्च; Ś1 (*sup. lin.*) K2–4 T2 च कृतविद्याश्च; K1 D4 च ब( D4 च )लचित्ताश्च; K5 B1. 3. 4 Dn D2. 3. 5. 6. 8 चपलवृत्ताश्च; T1 G4 च फलचिंताश्च. — $^{d}$) D2. 3. 5. 6 भवंति च दुरासदाः (D8 °दः).

11 $^{a}$) K1 गोरा-; B1 गोधैद्; D7 G गौरा-; T1 भौरा- (for गोधा-). — $^{b}$) K5 V1 B Da Dn D2. 3. 5. 6. 8 तथा; D7 T G जनाः (for ऽपि च). — $^{c}$) D4 कुरंग- (for तुरंग-). — $^{d}$) B1 ये (for ते).

12 $^{a}$) B1 असंहताः; B4 सुसहताश्च (hypermetric); T2 सुसंहिताः. B1 Dn D8 सुतनवो (for प्रत°). — $^{b}$) K5 B1 सुसंहताः; V1 B5 G1 °हिताः; G3. 4 °शिताः (for °स्थिताः). D4 व्यूढोरस्कंधसंहताः. — $^{c}$) All MSS. (except Ś1 K1. 4; D1 missing) प्रवा( T2 G1 विषा )दितेषु (for °तेन). Dn2 कुप्यंति (for नृत्यन्ति). — $^{d}$) K1 हृष्टंति; V1 नृत्यंति (for हृष्यन्ति).

C. 12. 3745
B. 12. 101. 13
K. 12. 101. 14

गम्भीराक्षा निःसृताक्षाः पिङ्गला भ्रुकुटीमुखाः ।
नकुलाक्षास्तथा चैव सर्वे शूरास्तनुत्यजः ॥ १३
जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽपि च ।
वक्रबाह्वङ्गुलीसक्ताः कृशा धमनिसंतताः ॥ १४
प्रविशन्त्यतिवेगेन संपरायेऽभ्युपस्थिते ।
वारणा इव संमत्तास्ते भवन्ति दुरासदाः ॥ १५
दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः ।
उन्नतांसा पृथुग्रीवा विकटाः स्थूलपिण्डिका ॥ १६
उद्वृत्ताश्चैव सुग्रीवा विनता विहगा इव ।
पिण्डशीर्षाहिवक्त्राश्च वृषदंशमुखा इव ॥ १७
उग्रस्वना मन्युमन्तो युद्धेष्वारावसारिणः ।
अधर्मज्ञावलिप्ताश्च घोरा रौद्रप्रदर्शिनः ॥ १८
त्यक्तात्मानः सर्व एते अन्त्यजा ह्यनिवर्तिनः ।
पुरस्कार्याः सदा सैन्ये हन्यन्ते घ्नन्ति चापि ते ॥ १९
अधार्मिका भिन्नवृत्ताः साध्वेवैषां पराभवः ।
एवमेव प्रकुप्यन्ति राज्ञोऽप्येते ह्यभीक्ष्णशः ॥ २०

इति श्रीमहाभारते शान्तिपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

13 a) K1 विस्तृताक्षाः; K3 निवृ°; K4 निःस्मृतांक्षाः (sic); D7 T G2-4 S निसृष्टाक्षाः; G1 निसृष्टाः (submetric) (for निःसृताक्षाः). — b) K4. 5 V1 B (except B3) Da Dn पिंगाक्षाः; T2 G1 पिंगल-. Some MSS. भृकुटी°. K1 पिंग*भ्रुकुटीमुखः. — c) K1 नकुलाक्षस्. D7 T1 G2-4 चैते (for चैव). — d) T2 G1 ते वै (for सर्वे). K4 सूरास्; D8 शूपास् (for शूरास्). D7 G4 तनुत्यजाः.

14 a) D2 जिह्माक्षः. K1 प्रललाट(sup. lin. °पा)-श्च; B1 °याक्षाश्च; B2 °लाटाक्षा. — b) Bo. 5 [ऽ]पि वा; D7 T1 G [ऽ]व्यथाः; M [ऽ]प्यथ (for ऽपि च). — c) K4. 5 Bo. 5 Dn D6. 8 वज्र- (for वक्र-). K5 -स्वक्थाः; V1 -सृक्थाः; Bo. 4. 5 -सक्याः; B2 -शक्याः; B3 D7 T1 G2-4 M -सक्थाः; Da Dn -चक्राः; D2. 3. 5. 6 -शक्यः; D8 -सत्थाः; T2 -कस्थाः; G1 -सक्त्यः (for -सक्ताः). K3 वक्रबाह्वंसनासाक्षा; B1 चक्रवाकांगुलीवक्राः.

15 a) Dn च (for [अ]ति-). K3. 5 V1 Bo. 2-5 Da D2-6. 8 प्रवेपंतीव (K3. 5 D2. 6. 8 °ती च) वेगेन; B1 प्रवेपंतोपि वनेन (sic); D7 T1 G प्रवेपंते हि (T1 G4 °तेभि-; G1. 2 °ते ह) वे°; T2 प्रवेपयंति वे°; M प्रा(M4 प्र)पतंती च (M2 °तीव) वे°. — b) K2. 4. 5 B (except B1) Da Dn D2. 3. 5. 7. 8 S सांपराये. Ca cites संपरायः. K2. 4. 5 B D (except Da; D1 missing) S (except G1) ह्युपस्थिते (for ऽभ्युप°). — c) Da1 संस्रतास् (sic) (for °मत्तास्). — d) K1 दुरासदः.

16 a) K4 दीप्तस्फुटिरकेशार्ता; D2. 3. 5. 6 प्रदीप्तस्फुटकेशांताः; D4 G1 दीप्तस्फटिकके°. — b) M1. 3 स्थूला. — c) K1 उन्नतांसः; M4 °तासोः. T2 G1 -श्रोणी- (for -ग्रीवा). — B1 om. (hapl.) from. 16d up to विनता (in 17b). — d) K3 B2. 4 Dn1 M -पिं(M4 -पं)डकाः; G3 -चंडिकाः.

17 B1 om. up to विनता (cf. v. l. 16). — a) K1 उद्धृतश्; K2-5 B3 Dn D2. 3. 5. 6. 8 उद्धृता; V1 Da उड्डुपा; Bo. 2. 4. 5 उद्धृया (B2 °वा); D4 उद्दीपा; D7 S उद्धं(D7 T2 G1 °द्ध)धा (for उद्वृत्ताश्). All MSS. (except Ś1 K1. 4; B1 om.; D1 missing) इव (for चैव). — c) T1 G2-4 पिंडि- (for पिण्ड-). K1 -शेषाहि-; K3. 5 B3. 5 Dn D2. 3. 5. 6. 8 M -शीर्षाति-; V1 Bo-2. 4 -शीर्षाणि; Da °क्षि-; D4 °र्षा वि-; T2 °र्षाभि- (for °हि-). V1 Bo. 1 -चक्राश्च (for -वक्त्राश्च). — d) D2. 3. 6 वृक°; D7 T1 G1. 3. 4 M1. 3 पृष° (for वृष°). All MSS. (except Ś1 K1. 2. 4; D1 missing) तथा (for इव).

18 a) K3. 5 Bo. 3. 5 Dn1 D2-8 S (except G2) उग्रस्वरा. — b) V1 -संयुताः; Da2 -सारिका; G3 -सारिणाः. — c) Ś1 K1. 3 D2 अधर्माज्ञानलि°. — d) M2. 4 घोररूप- (for घोरा रौद्र-). K3. 5 Bo-4 Da Dn1 D4. 7. 8 S -प्रदर्शनाः.

19 a) V1 M एव (for एते). — b) D2 अत्यज्ञा (sic); D7 T1 G उ(G4 ह्यु)दग्रा (for अन्त्यजा). Da ह्यभिवर्तिनः; Dn1 ज्ञाति°; M2 चानि°. K4 अंत्यजात्यनिवर्तिनः; Dn2 D3 (before corr.). 5. 6 कुलज्ञा जाति°; M1. 3. 4 ह्यंत्यजाश्चानि°. ❀ Cn: अन्त्यजाः प्रान्तदेशोद्भवाः । ❀ — c) D5 पुरस्कार्यैः; G3 °स्कारः. B1 सैन्या; D7 G3. 4 सैन्यैर्; G1 सैन्यो. — d) D5 प्रति; G1 हंति (for घ्नन्ति). K4 वा (for च). Dn1 ये (for ते). D5 वापरे; M वा(M2 चा)परान् (for चापि ते).

20 a) T1 M3 अधर्मिका. Ś1 K1. 4 [अ]धर्मवृत्ताः (for भिन्न°). — b) K2. 5 V1 Bo. 2-5 Da Dn D2. 3. 5. 8 सां(V1 B2 शां)त्वेनैषां; K3 D4 साक्रोशा वै;

# १०३

युधिष्ठिर उवाच ।
जैत्र्या वा कानि रूपाणि भवन्ति पुरुषर्षभ ।
पृतनायाः प्रशस्तानि तानीहेच्छामि वेदितुम् ॥ १
भीष्म उवाच ।
जैत्र्या वा यानि रूपाणि भवन्ति पुरुषर्षभ ।
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥ २
दैवं पूर्वं विकुरुते मानुषे कालचोदिते ।
तद्विद्वांसोऽनुपश्यन्ति ज्ञानदीर्घेण चक्षुषा ॥ ३
प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः ।
मङ्गलानि च कुर्वन्तः शमयन्त्यहितान्यपि ॥ ४
उदीर्णमनसो योधा वाहनानि च भारत ।
यस्यां भवन्ति सेनायां ध्रुवं तस्यां जयं वदेत् ॥ ५
अन्वेनां वायवो वान्ति तथैवेन्द्रधनूंषि च ।
अनुप्लवन्ते मेघाश्च तथादित्यस्य रश्मयः ॥ ६

C. 12. 3756
B. 12. 102. 6
K. 12. 102. 6

---

K4 संत्वेवैषां; B1 सा*नैयां; D6 सांत्वेनेर्ष्याः; D7 स्पर्धैवेषां (for साध्वेवैषां). K3 D4 पराभवे. — [c]) V1 Bo. 5 Da D8 एते; M4 एवं (for एव). D6 प्रयुध्यंते; D7 T G प्रस्रू( T2 G1 °दू )थ्यंते. — [d]) D7 T1 G1. 3. 4 हि (for ऽपि). Bo. 4 [ऽ]पि (for हि). B1 ह्यभीक्षवः; Da1 °भक्षिणः.

Colophon: D1 missing. —*Sub-parvan:* Ś1 K V1 B1-5 Da Dn D2-7 T G1. 2. 4 M राजधर्म. —*Adhy. name:* Ś1 K1-4 V1 B Da D2-6 विजिगीषमाण( Ś1 K4 °न )वृत्तः; K5 विजिगीषावृत्तः; D7 T G शूरलक्षणं. —*Adhy. no.* (figures, words or both): B1 92; B2 Dn2 D6 101; B3. 4 Dn1 100; Da1 102 (as in text); D7 S 103; D8 98. —*Śloka no.:* Dn D8 20.

## 103

☞ D1 is missing for this adhy. (cf. v.l. 12. 79. 28).

1 D8 om. the ref. — [a]) K1 जैत्र्या वै; K3 D4 जैत्राणि; K5 V1 B Da Dn D2. 3. 6. 8 जयित्र्याः; D5. 7 S जयि( M4 °नि )न्याः (for जैत्र्या वा). — [b]) K (except K4) B Dn D2. 3. 5-8 S भरतर्षभ (for पुरुष°). — [c]) K1 पृतनायां; D4 °नायः. — [d]) K1 om. (hapl.) from हेच्छामि up to तानि (in 2[d]). K3 V1 B1-5 Da Dn D3. 5 तानि चे°; K5 D7 (before corr.) T1 G1 तानि हे°.

2 K1 om. up to तानि (cf. v.l. 1). Ś1 D8 om. the ref. M1. 3. 4 om. (hapl.) 2. Ś1 reads 2 on marg. — [a]) Ś1 जेत्र्या वा; K3 D4 जेत्राणि; K5 V1 B Da Dn2 D2. 3. 5. 6. 8 जयित्र्या; Dn1 D7 T G M2 जयिन्या (for जैत्र्या वा). — [b]) K5 B (except B2) Dn D2. 3. 5-8 S भरतर्षभ (for पुरुष°). — [d]) K3 भारत (for सर्वशः).

3 [a]) K5 Dn D5. 8 दै( D8 दे )वे; Bo. 1 दैव-. K5 Bo. 4 Dn D2. 3 (*sup. lin.*). 5. 8 प्रकुपिते; V1 B1-3. 5 D3. 6 M2 प्रकुरुते ( M2 °त ); D7 T G हि कुरुते. — [b]) K1 मानुष्ये; D4 मानुखं. Ś1 K1-3 V1 Bo-2. 5 Da D4. 6 कालचो( K3 °वो )दितं; M1 °वोदिते. — [c]) M प्रपश्यंति (for ऽनुप°). — [d]) Dn1 ज्ञानदिव्येन; D4 ज्ञानं दीर्घेण.

4 [a]) M4 प्रायश्चित्तं. Da जातु (for चात्र). — [b]) K1. 5 Dn2 D4 G1. 2 जप( K1 °य )होमाश्च; D2. 3 (before corr.). 5. 6 °होमेन; D3. 8 °होमादि; D7 T1 G3. 4 जपान्होमांश्च. K2 -विदान्; K4 -विधिः (for -विदः). — [c]) Some S MSS. मंगलानि. D6 M4 lacuna; T2 G1 [अ]पि (for च). K2. 3. 5 V1 B D (D1 missing) T G कुर्वंति. — [d]) D2. 3. 5. 6 [अ]शुभानि; M2 [आ]हितानि. K5 V1 B Da Dn D2. 3. 5. 6. 8 T2 M2 च (for [अ]पि).

5 [a]) T1 G3. 4 M1. 3. 4 यौधा. — [d]) G1 M ध्रुवस्. K5 Bo. 2-5 Da D2. 3 S तस्याः ( T2 °स्य ) (for तस्यां). K3. 5 D7 S जयो भवेत्; V1 B Da Dn D2. 3. 5. 6. 8 परो जयः (for जयं वदेत्).

6 =(var.) 6. 4. 24. — [a]) K2-4 अन्वेतां; K5 B3 Dn D2. 3. 5 °तान्; V1 Bo-2. 4. 5 Da °षां; D4 अश्वेतां; D6 अन्येतान्; D7 S अन्वेव (for अन्वेनां). K4 नयवो; G1 वायसो (for °वो). Ś1 Bo. 3. 4 Da1 D5 T2 M2 यांति (for वान्ति). — [b]) K4 तदेव (for तथैव). — [c]) K3 V1 Dn D2. 3. 6 अनुप्लवंति ( V1 Dn1

C. 12. 3759
B. 12. 102. 7
K. 12. 102. 7

गोमायवश्चानुलोमा वडा गृध्राश्च सर्वशः ।
आचरेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥ ७

प्रसन्नभाः पावक ऊर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां प्रवान्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ८

गम्भीरशब्दाश्च महास्वनाश्च
शङ्खाश्च भेर्यश्च नदन्ति यत्र ।
युयुत्सवश्चाप्रतीपा भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ९

इष्टा मृगाः पृष्ठतो वामतश्च
संप्रस्थितानां च गमिष्यतां च ।
जिघांसतां दक्षिणाः सिद्धिमाहु-
र्ये त्वग्रतस्ते प्रतिषेधयन्ति ॥ १०

मङ्गल्यशब्दाः शकुना वदन्ति
हंसाः क्रौञ्चाः शतपत्राश्च चाषाः ।
हृष्टा योधाः सत्त्ववन्तो भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ११

शस्त्रैः पत्रैः कवचैः केतुभिश्च
सुभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिप्रेक्षणीया
येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ १२

शुश्रूषवश्चानभिमानिनश्च
परस्परं सौहृदमास्थिताश्च ।

---

°तो ); D5 °स्रवंति.

7 a) K5 V1 B Da Dn D2.3.5.6.8 [अ]नुकूला ( for °लोमा ). — b) K1 बहु ( marg. बाला ); K5 वटा; V1 Bo.4.5 Da D2.3.5.6.8 बला; B1 lacuna; B2 Dn बल-; D7 S वळा ( D7 °ला ) ( for वडा ). — c) K5 हर्षयेयुर्; V1 Bo.1 आहत्रे°; B3-5 Dn D8 अर्हयें°; Da आहरे°; D3.6 आच( D3 *sup. lin.* अर्द )ये° ( for आचरे° ). — d) D7 S सा हि ( for तदा ).

8 = ( var. ) 4. 6. 16. — a) Ś1 K1-3 Dn2 D4 प्रसन्नाभः. K3.4 Dn D4 चोर्ध्वरश्मिः; D7 और्ध्व°. — c) Ś1 K2 T2 G2 M प्रयांति; K3 प्राति ( sic ); Da प्रवाति; Dn D7 T1 G1.3.4 भवंति ( for प्रवान्ति ). — $8^d = 9^d$.

9 K1.4 om. ( hapl. ) 9–11; D6 G2 om. ( hapl. ) 9. D7 T G1.3.4 transp. 9 and 12. $9^{ab}$ = ( var. ) 6. 4. 17. — b) D2 शंखांश्च; D4 शेषाश्च. G1 वदंति. — c) K3 चाप्रतीतां; B2 Da Dn1 D3.5.7 S ( except T2; G2 om. ) चाप्रतिमा ( Dn1 °पा ); D4 संप्रतीता. — $9^d = 8^d$; = 6. 4. $16^d$. — After 9, M reads 12.

10 K1.4 om. 10 ( cf. v. l. 9 ). Ś1 K2 om. ( hapl. ) 10–11. $10^{abd}$ = ( var. ) 6. 4. $18^{abd}$. — a) Bo शृगालाः ( for मृगाः ). — b) B1 संप्रतितानां. — c) Bo.5 D2.3.5.6 M1.3 दक्षिणां; D7 T2 G1 °क्षिण-; T1 G2 °क्षिणतः. — d) Da यं ( for ये ). B2 चाग्रतस् ( for त्व° ). D2.3.5.6.8 विनि- ( for प्रति- ).

11 Ś1 K1.2.4 om. 11 ( cf. v. l. 9; 10 ). $11^{ab}$ = ( var. ) 6. 4. $19^{ab}$. — a) K5 B3.4 Dn D2.3.5–7 T2 G1.2 M2 मांगल्य-. K3 lacuna; K5 V1 B D4.7.8 T1 G2-4 -शब्दान्; D5 -शराः; T2 G1 M -शब्दः ( for -शब्दाः ). — b) T2 G1 सह ( for शत- ). K5 Bo.3 D2.3.5.6.8 च भासाः; B1.2.4.5 च चासाः; D3.7 T G सहर्षाः; M च हर्षान् ( for च चाषाः ). — c) T1 G4 M1.3.4 यौधाः. K5 V1 Bo-2.4 Da D8 खड्गवंतो; G2 शतपत्रा ( for सत्त्ववन्तो ). M1-3 वदंति ( for भवन्ति ). D2.3.5.6 हृष्टा योधाः प्रस्थिताः खड्गवंतो.

12 = ( var. ) 6. 4. 20. B1.2 om. ( hapl. ) 12–13. D7 T G1.3.4 transp. 9 and 12. M reads 12 after 9. — a) K5 V1 Bo.3-5 Da Dn D2 यंत्रैः ( for पत्रैः ). T2 G1 om. from कवचैः up to भानुभि ( in $12^b$ ). K1 कटकैः ( for कवचैः ). — b) K1 सभानुविंदु-; K4 Da D3.4 M2.4 स्व( D4 स )भानुभिर्; D5 M1.3 स्वर्भा°. G1 M1.3.4 पुंसां ( for यूनाम् ). — After $12^{ab}$, T2 G1 ins.:

240* तथा गजैर्वाजिभिर्हेषमाणैः

[ G1 °भिर्हेपिताभिः. ]

— c) V1 om. प्रति-. K4.5 Bo.3-5 D ( except D4; D1 missing ) T1 G3.4 -वीक्षणीया ( for -प्रेक्ष° ). — d) G1 हि ( for ऽभि- ).

13 B1.2 om. 13 ( cf. v. l. 12 ). — b) K1.4 आश्रिताश्; M4 आन्वि° ( for आस्थि° ). — D2 om. $13^c$–$29^a$. — c) G1 एषां. T1 G4 M1.3.4 यौधाः;

येषां योधाः शौचमनुष्ठिताश्च
जयस्यैतद्भाविनो रूपमाहुः ॥ १३
शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः ।
धैर्यं चाविशते योधान्विजयस्य मुखं तु तत् ॥ १४
इष्टो वामः प्रविष्टस्य दक्षिणः प्रविविक्षतः ।
पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधति ॥ १५
संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैवावर्तने पूर्वं प्रयतेथास्ततो युधि ॥ १६
जघन्य एष विजयो यद्युद्धं नाम भारत ।
यादृच्छिको युधि जयो दैवो वेति विचारणम् ॥ १७
अपामिव महावेगास्त्रस्ता मृगगणा इव ।
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः ॥ १८
भग्ना इत्येव भज्यन्ते विद्वांसोऽपि नकारणम् ।
उदारसारा महती रुरुसंघोपमा चमूः ॥ १९
परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः ।
अपि पञ्चाशतिः शूरा मृद्नन्ति परवाहिनीम् ॥ २०
अथ वा पञ्च षट्सप्त सहिताः कृतनिश्चयाः ।
कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ॥ २१

C. 12. 3773
B. 12. 102. 21
K. 12. 102. 21

G1 सौधाः (for योधाः). K4 सत्वम्; V1 सत्यम्; D7 T1 G3.4 शौर्यम् (for शौचम्). D3.5.6 येषां योधाः सौहृदमन्वतिष्ठन्.

14 Cf. 6. 4. 23. D2 om. 14 (cf. v. l. 13). — b) G3 विचिन्वंति; M1.3 च रमंति (for विचरन्ति). V1 B4.5 भवंति मनसः प्रियाः. — c) Ś1 K1.4 आविश- (K4 °ष)ते; V1 B2.3 प्रा(B2 प्र)विशते; D6 च विं°; M1 चाव°; M4 चावशतो. Ś1 K1.4 D8 योधा; G1 M1.3.4 यौधान्. — d) K1 सुखस्य; D8 सुखं हि (for मुखं तु). K5 V1 B Da D3.5–7 T1 G2–4 हि; Dn च; D4 तु (for तु).

15 = (var.) 6. 4. 22. D2 om. 15 (cf. v. l. 13). — a) Ś1 K4 काको (for इष्टो). K1 वासा; B2 वायुः (for वामः). D7 S शब्दोः वामः प्रस्थितस्य; Cv शब्दो वामे प्रविष्टस्य. ❀ Cn: इष्टः, काक इति शेषः । ❀ — b) K1 दक्षिः (sic); G1 दक्षिणं. K3 V1 Bo D4.7 G1 प्रविविक्षि(D4 °क्ष्य)तः. G2.3 दक्षिणस्य विवक्षतः. — c) Bo.5 D5.8 संबोधयति; B4 संयोधयति; G2 संसाधयतु. V1 B4.5 D3.5–8 S [ए]नं (for [अ]र्थं). — d) K4 प्रतिषेधत; Dn च निषेधति.

16 D2 om. 16 (cf. v. l. 13). $16^{ab}$ = (var.) 6. 4. $31^{ab}$. — a) K1 (*sup. lin.*) D7 S (except M4) संहृत्य; K5 B (except B1) D3.5.6.8 संवृत्य. — b) K4 B5 सा नैव; D3.6 साम्नेव; D5.8 सामैव. K2 B1.2 [आ]वर्तते (B2 °येः); K3.5 V1 Bo.3–5 D3.6 वर्तते (K5 °येत्); Da D4.5.7.8 [आ]वर्तयेत्; Dn वर्तयेः; S [आ]वर्तयन् (for °र्तने). — d) Bo.4 T2 तथा युधि; B5 युधिष्ठिर; D5 व्रतो युधि.

17 D2 om. 17 (cf. v. l. 13). $17^{ab}$ = (var.) 6. 4. $32^{cd}$. — a) D5 जघनम्. D7 T1 G2–4 एव (for एष). — b) T2 G1 यथार्हं (for यद्युद्धं). D7 T1 G2–4 यद्युद्धे सामभाषणं; M1.3 यो युद्धेन नराधिप. — c) D7 S यदृच्छया (for यादृच्छिको). — d) Ś1 K4 D3.5 दैवो वेत्ति; D7 S दैवेनेति. Ś1 K1.2.4 विचार(K1 °रि)णां; D3 (before corr. as in text). 7.8 T G °रणा; M विधा(M4 °सा)रणा.

18 D2 om. 18 (cf. v. l. 13). $18^{ab}$ = 6. 4. $28^{cd}$. — a) Ś1 K4 अपामेव; D7 T1 G M आपगेव; T2 अपरे च (for अपामिव). D7 S (except G2 M2) महावेगा. — b) Dn1 त्रस्ता इव महामृगाः. — $18^{cd}$ = (var.) 6. 4. $28^{ab}$. — c) Bo.4.5 अनिवार्य- (for दुर्नि°). M -तरा (for -तमा). — d) B5 च महा- (for महती).

19 Cf. 6. 4. $29^{cd}$. D2 om. 19 (cf. v. l. 13). Ś1 K1.2 read 19 after $22^{ab}$. K4 repeats it after $22^{ab}$. — a) D5 मन्यंते (for भज्यन्ते). — b) K3 D4 M2 नकारणात्; M1.3.4 ह्यकारणं. — d) G1 रुरुत्-; M4 कुरु- (for रुरु-).

20 Cf. 6. 4. $33^{abcd}$. D2 om. 20 (cf. v. l. 13). — a) D7 T1 संसृष्टास्. — b) K4 सनिश्चिताः; Da सुनिष्ठिताः. — c) K2.3.5 B2.3 Dn D3–5.7.8 S Cb पंचा(D7 T G Cb °च)शतं; V1 Bo.1.4.5 Da D6 °शतः; Ca °शतिः (as in text). — d) B3 Dn D3.5.6 निघ्नंति (for मृद्नन्ति). K1 परवाहिनीः.

21 D2 om. 21 (cf. v. l. 13). $21^{ab}$ = (var.) 6. 4. $33^{ef}$. — a) V1 B1.2 Da Dn T2 G1 M अपि (for अथ). — b) K1 सचिताः; B3 Dn संहताः; D3.5 संहृताः. Cap कृतनिश्चला. — d) M4 [इ]व (for [इ]ह).

C. 12. 3774
B. 12. 102. 22
K. 12. 102. 22

संनिपातो न गन्तव्यः शक्ये सति कथंचन ।
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥ २२
संसर्पणाद्धि सेनाया भयं भीरून्प्रबाधते ।
वज्रादिव प्रज्वलितादियं क्व नु पतिष्यति ॥ २३
अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ ।
तेषां स्पन्दन्ति गात्राणि योधानां विषयस्य च ॥ २४
विषयो व्यथते राजन्सर्वः सस्थाणुजङ्गमः ।
शस्त्रप्रतापतप्तानां मज्जा सीदति देहिनाम् ॥ २५
तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः ।
संपीड्यमाना हि परे योगमायान्ति सर्वशः ॥ २६
अन्तराणां च भेदार्थं चारानभ्यवचारयेत् ।
यश्च तस्मात्परो राजा तेन संधिः प्रशस्यते ॥ २७
न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा ।
यथा सार्धममित्रेण सर्वतः प्रतिबाधनम् ॥ २८
क्षमा वै साधुमाया हि न हि साध्वक्षमा सदा ।
क्षमायाश्चाक्षमायाश्च विद्धि पार्थ प्रयोजनम् ॥ २९

---

22 D2 om. 22 (cf. v. l. 13). —a) Cf. 12. 105. 12a. D8 संनिपाते. G1 [ऽ]नु- (for न). K3 B3 Dn D3. 5. 6. 8 मंतव्यः. —b) B1 शक्ते (for शक्ये). — After 22ab, Ś1 K1. 2 read and K4 repeats 19. —c) V1 शांत्व- (for सान्त्व-). Ś1 -प्रभेदानां; B0 -प्रदातानां; G1 -प्रमादानां. B1 सामेदेन प्रमादानां (sic). —d) D7 T1 G2–4 उत्तमम्; M1 च परम्; M2–4 त्वव(M2 °प)रम् (for उत्तरम्). G1 corrupt.

23 D2 om. 23 (cf. v. l. 13). —a) D7 T1 G2–4 संसर्पेण (for °र्पणाद्). K3 V1 B2 Da D4 संसर्पणेन सेनाया; K5 B3. 4 D8 संस्पर्शेनै(D8 °णै)व से°; B0. 1. 5 T2 G1 M संसर्पै(B1 °र्यै)णैव से°; Dn संदर्शै(Dn2 °र्शं)नैव से°; D3. 5. 6 संदर्शने च से°. —b) B1. 3 Dn1 D8 तीव्रं (for भीरून्). K1 D4 प्र(D4 वि)वर्धते; B1 प्रधावते (for प्रबाधते). D7 S भीरूनाविशते भयं. —c) T2 G1 वज्राशनि- (for वज्रादिव). G1 -प्रज्वलिता. —d) M1. 4 इवं (for इयं). T2 G1 विष्वक्; M स्वित्क (for क्व नु). K1. 5 B1 D6 प्रतिष्ठति; K3 पतिष्यते. D7 T1 G2–4 इयं स्वित्क्षपयिष्यति.

24 D2 om. 24 (cf. v. l. 13). —a) Ś1 K1. 4 अभिप्रयातान् (K4 °त्); B2 °प्रायातां. —b) K1 प्रतियात्यथ; G4 (before corr.) °यांति च. — D6 om. (hapl.) 24c–25d. —c) B2. 3 D8 येषां (for तेषां). K3–5 V1 B0. 2. 3. 5 Da Dn D3–5. 7. 8 स्यंदं(D8 °द)ति; G3 स्पंदति. —d) D7 S (except T2 G1. 2) यौधानां. K3 कषयस्य; K5 V1 B3. 5 Dn D3–5. 7. 8 विज(D4 °ध)यस्य (for विष°).

25 D2. 6 om. 25 (cf. v. l. 13, 24). —a) K5 B1. 3 विजयो; Da G1 विषये; Cv विजयात् (glossed as विरुद्धजयात्, पराजयात्). T1 G2–4 [ऽ]प्यथ ते (for व्यथते). —b) B0. 5 सर्वतः (for सर्वः स-). K3 D5 -जंगमं; B5 G2 -जंगमाः. V1 B1. 2 Da D8 सर्वं वै (B1 स-) स्थाणुजंगमं; T2 G1 सर्वस्थावरजंगमाः. —c) K2. 3. 5 V1 B Da Dn D3. 5. 8 अस्त्र- (for शस्त्र-). B0. 2. 5 D8 -दग्धानां (for -तप्तानां). —d) D7 S मज्जाः सीदंति देहिनां.

26 D2 om. 26 (cf. v. l. 13). —a) K5 B2 येषां (for तेषां). V1 शांत्वं; B1 T2 सत्त्वं; B2 सार्धं (for सान्त्वं). D7 कृतं (for क्रूर-). —b) D7 प्रयोक्तव्यः (for प्रणेतव्यं). —c) Da संपाद्य(Da2 °पीड्य)मानो; D6 सपीड्यमाना. K5 V1 B0. 2–5 Da Dn D3. 5–8 S परैर्; B1 जनैर् (for परे). —d) D3. 5. 6 आस्थाय (for आयान्ति). Ś1 V1 B Da Dn D3. 5. 6. 8 सर्वतः.

27 D2 om. 27 (cf. v. l. 13). —a) K3. 5 B2. 3. 5 Dn D3. 5–8 T1 G1. 4 आंतराणां. K3 शस्थानां; D4 सेव्यानां; D6 भेदार्थे. —b) K5 B3. 4 D3. 5–8 चरान्; B1 वीरान्; Dn1 वारान् (for चारान्). Da -धारयेत् (for -चारयेत्). —c) G1 यच् (for यश्). B0. 4. 5 तेषां (for तस्मात्). —d) K4 संध्यः; D7 T G सिद्धिः (for संधिः).

28 D2 om. 28 (cf. v. l. 13). —b) D5 शक्यं. T2 G1 कर्म (for कर्तुं). B1 तथाविधैः; D5 °विधः; G1 °विधं. —c) D7 T1 G3. 4 साध्यम् (for सार्धम्). —d) D7 T1 G2–4 मित्रेण (for सर्वतः). B4 D7 S परि- (B4 प्रति-). B4 -बाधनात्; Da1 -बोधनं; G2 -साधनं (for -बाधनम्).

29 D2 om. 29a (cf. v. l. 13). —a) K1 D4 M2 साध्वमा(K1 °सा)या हि; K5 V1 B Da Dn D3. 5–8 साधु(D7 °ध्य)मायाति; T G1. 2. 4 साध्वमायानां; G3 सा*मानायं; M1. 3 साक्षमा या च; M4 साध्वक्षमा च. —b) K2 D7 S न (K2 यो) हि साधु क्षमा सदा (T G सदा क्षमा); K3 Dn2 न ह्यसाधून्क्षमा सदा; K5 V1 B Da Dn1 D2. 3. 5. 6. 8 न त्व(Dn1 न ह्य-; D2 ये त्व)साधुं क्षमा सदा. —d) Dn1 पार्थ विद्धि (by transp.).

विजित्य क्षममाणस्य यशो राज्ञोऽभिवर्धते ।
महापराधा ह्यप्यस्मिन्विश्वसन्ति हि शत्रवः ॥ ३०
मन्यते कर्शयित्वा तु क्षमा साध्विति शम्बरः ।
असंतप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः ॥ ३१
नैतत्प्रशंसन्त्याचार्या न च साधु निदर्शनम् ।
अक्लेशेनाविनाशेन नियन्तव्याः स्वपुत्रवत् ॥ ३२
द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर ।
मृदुमप्यवमन्यन्ते तस्मादुभयभाग्भवेत् ॥ ३३
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च कृपायेत शोचन्निव रुदन्निव ॥ ३४
न मे प्रियं यत्स हतः संप्राहैवं पुरो वचः ।
न चकर्थ च मे वाक्यमुच्यमानः पुनः पुनः ॥ ३५
अहो जीवितमाकाङ्क्षे नेदृशो वधमर्हति ।
सुदुर्लभाः सुपुरुषाः संग्रामेष्वपलायिनः ॥ ३६
कृतं ममाप्रियं तेन येनायं निहतो मृधे ।
इति वाचा वदन्हन्तॄन्पूजयेत रहोगतः ॥ ३७
हन्तॄणां चाहतानां च यत्कुर्युरपराधिनः ।
क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षञ्जनसंग्रहम् ॥ ३८

C. 12. 3790
B. 12. 102. 38
K. 12. 102. 38

---

30 a) $K_{4.5}$ क्षममानस्य. — b) $K_4$ राज्ञा; $V_1$ राष्ट्रे; $D_{2.3.5.6}$ चैव (for राज्ञो). $K_{2.5}$ $B_{2.3}$ Dn $D_7$ T G $M_{1.3.4}$ विवर्धते; $K_3$ [ऽ]भिवर्तते; $B_1$ [ऽ]तिदुर्लभं; $M_2$ [ऽ]पि वर्धते. — c) All MSS. (except $Ś_1$ $K_1$ $D_4$; $D_1$ missing) महापराधे. $D_{2.3.6}$ वै हि (for ह्यपि). — d) All MSS. (except $Ś_1$ $K_{1.2.4}$; $D_1$ missing) [अ]पि (Da [अ]भि-) (for हि).

31 a) $Dn_3$ $D_3$ (before corr.).6 मन्यंते. $B_2$ Da [अ]पि (for तु). $D_7$ S कर्श($D_7$ $G_{2.3}$ °र्ष)यित्वा तु ($M_2$ °त्वाव-) मन्यंते. — b) $Ś_1$ क्षमं; $K_{1.4}$ $D_{4.6}$ $M_{1-3}$ क्षमां. $K_{2-4}$ $V_1$ B Da Dn $D_3$ (by corr.). 4.6–8 T $G_{1.2}$ $M_{1.3}$ साध्वीति. $K_5$ $D_{2.3}$ (before corr.).5 [अ]संशयः; $Bo._2$ $D_4$ सं($B_2$ स)बरः; $D_7$ S शां($D_7$ सां-; $T_1$ शं-; $G_1$ गां-; $M_2$ शा)बराः — c) $M_2$ च (for तु). $K_4$ यद्दारुं. ❀ Cv: सं सम्यक्तप्तं न भवतीति असंतप्तम्, ईषत्तप्तमित्यर्थः । ❀ — d) $D_5$ प्रवृत्तिं (for प्रकृतिं).

32 a) M न तत्संतापयं($M_2$ °य)त्यार्या. — b) $K_3$ Dn सत्तु; $Bo._{4.5}$ नैतत्; $B_2$ Da $Dn_1$ $D_4$ न तु (for न च). $D_7$ S न चैतत्साधुद($M_{1.3}$ °क)र्शनं. — c) $V_1$ अक्रोधेन (for अक्लेशेन). $T_1$ $G_{1.3.4}$ (before corr.) $M_2$ [अ]पि (for [अ]वि-). $D_4$ अक्लेशो मा विनाशेन. — d) $K_1$ नियंतव्यः. $K_1$ स; $D_{2.3.5.6}$ च (for स्व-).

33 Cf. 12. 104. 33. — a) $D_3$ द्वेषो. — b) $D_6$ युधिष्ठिरः. — d) $Dn_1$ उभयमाचरेत्; $M_{1.3.4}$ °भाग्भव.

34 = (var.) Ādi, App. I, No. 81, lines 113–114; cf. B. 12. 140. 54. — a) $K_4$ प्रहरिष्यं; $M_{1.3}$ °रिष्य. — c) $K_1$ प्रहृष्य च; $D_6$ °हृष्यति; $T_2$ प्रगृह्य च. $K_5$ $V_1$ $Bo._{2-5}$ Da Dn $D_{2.3.5.6.8}$ कृपायीत; $B_1$ क्षमा*त; $D_7$ T G प्रियं ब्रूयात्. — d) $D_4$ om. रुदन्निव.

35 a) $M_{1.3}$ नेमे (for न मे). $K_{1.2}$ तत्सहतां ($K_2$ °ताः); $K_3$ $D_4$ यत्प्रहताः; $K_4$ तत्सहिताः; $K_5$ $Bo._{3.5}$ Da Dn $D_{2.3.5.8}$ यन्निहताः (Da °तं); $V_1$ $B_{1.2.4}$ $D_6$ यन्निहतः; $M_{1.3}$ यन्महतां; $M_2$ दयेत्स हताः (hypermetric); $M_4$ यत्स हतः. $D_7$ T G न मे प्रिया ये स हताः. — b) $K_2$ संप्राहैव; $B_1$ स प्रयाहि (for संप्राहैवं). $K_3$ सुरावचः; $V_1$ $Bo_{-2.5}$ Da $D_{2.3}$ (before corr.).6 पुनः पुनः (for पुरो वचः). $K_5$ $B_{3.4}$ Dn $D_3$ (by corr.).5.8 संग्रामे मामकैर्नरैः; $D_7$ T G संप्रहृष्टाः ($G_1$ °हर्षाः) परेपि (T °षु) च; M संप्रहर्षैः परो न च. — $Da_1$ om. (hapl.) 35cd. — c) $K_1$ चकर्त्थं च; $K_3$ चकर्ष च; $K_5$ $B_{1.3.4}$ Dn $D_3$ च कुर्वंति; $V_1$ $B_5$ च कथं च; $B_2$ $G_{1.2}$ $M_2$ च कत्थ च; $D_{2.3.6}$ च कैश्चन; $D_5$ च केचन; $D_7$ $T_1$ $G_{3.4}$ च कत्थन; $T_2$ च कृष्यथ (for चकर्थ च). $D_7$ $T_1$ $G_{2-4}$ वाक्य($G_2$ °प्र)म् (for वाक्यम्). — d) $K_{1.5}$ $Bo._{1.3.4}$ Dn $D_3$ उच्यमानाः ($B_1$ °नः); $V_1$ $B_{2.5}$ $Da_2$ $D_{2-4.6.7}$ S °मानं. $D_{2.6}$ श्रुतं (for the first पुनः).

36 a) $Ś_1$ $K_{1.2.4.5}$ $B_3$ Da $D_5$ आकांक्षेन् ($Ś_1$ $K_{2.4}$ °द्); $B_1$ $D_6$ °क्षं; $D_{2.3}$ °क्षंस् (for °क्षे). — b) $Ś_1$ $K_{2.4}$ ईदृशो; $D_{2.3}$ तादृशो (for ने°). — c) $K_1$ सुदुर्लभः; Da अदुर्लभाः. $K_2$ हि पुरुषाः; $K_4$ ह्यपुरुषः; S (except $M_2$) सत्पुरुषाः. — d) $D_4$ संग्रामेपि.

37 ab) $K_4$ ममाप्रिया; Bo $D_{6.7}$ मयाप्रियं. $Ś_1$ transp. तेन and येन. $K_3$ $Bo._{4.5}$ M युधि (for मृधे). — c) $D_7$ हेतून्; $D_3$ हंसत् (for हन्तॄन्). — d) $D_7$ S (except $G_2$) रहोगतान्.

38 a) $K_1$ $G_1$ हर्तॄणां. $K_{3.5}$ $V_1$ B Da Dn $D_4$ आहतानां; $D_{2.3.5.6.8}$ वा ह°; $D_7$ S (except $T_2$) च ह° (for चाह°). $Ś_1$ $K_1$ $D_3$ तु; $D_3$ वा (for च).

C. 12. 3791
B. 12. 102. 39
K. 12. 102. 39

एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरन् ।
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥ ३९
विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत ।
विश्वस्तः शक्यते भोक्तुं यथाकाममुपस्थितः ॥ ४०
तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया ।
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥ ४१

इति श्रीमहाभारते शान्तिपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## १०४

युधिष्ठिर उवाच ।
कथं मृदौ कथं तीक्ष्णे महापक्षे च पार्थिव ।
अरौ वर्तेत नृपतिस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ २
बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः ।
उपसंगम्य पप्रच्छ वासवः परवीरहा ॥ ३
अहितेषु कथं ब्रह्मन्वर्तयेयमतन्द्रितः ।
असमुच्छिद्य चैवैनान्नियच्छेयमुपायतः ॥ ४

— $^{b}$) $K_8$ ये; $B_0$ तत्; $D_4$ यः; $D_6$ lacuna (for यत्). $D_4$ कुर्याद् (for कुर्युर्). $D_7$ S पूजां कुर्याद्यथार्थं ($M_{1.3.4}$ °र्हं)तः. — $^{c}$) $D_8$ $G_1$ कोशे. $V_1$ $T_1$ $G_{2-4}$ $M_2$ बाहून्; $B_{0.2.3}$ Dn $D_{2.3.6}$ $M_{1.3.4}$ बाहू; $B_{1.4}$ बाहु; $D_7$ बहून् (for बाहुं). $K_3$ $D_4$ [अ]थ (for [अ]पि). — $^{d}$) $K_{1.4}$ $D_8$ चिकीर्षं.

39 $^{b}$) $V_1$ $B_2$ शांत्वपूर्वं. $K_{3.5}$ $V_1$ $B_{1-3}$ D (except $D_4$; $D_1$ missing) S समाचरेत्. — $^{d}$) $B_1$ सर्वज्ञो; $M_4$ धर्मज्ञे. $G_1$ वीतहीर् (for °भीर्). $V_1$ $M_{2.4}$ नृप॰

40 $^{a}$) $B_3$ वात्र. — $^{c}$) $M_1$ भोक्तुर्. — $^{d}$) $D_4$ उपस्थिताः. $D_7$ T G यथाकालं समुत्थितः.

41 $^{a}$) $K_1$ विश्वसयेद्. — $^{c}$) $K_1$ परिरक्षेश्च; $K_4$ °क्षे च; $B_1$ °क्षेत. — $^{d}$) $B_1$ $G_1$ अर्हति (for इच्छति).

Colophon: $D_1$ missing. — *Sub-parvan:* Ś$_1$ K $V_1$ B Da Dn $D_{2-6}$ T $G_{1.2.4}$ M राजधर्म; $D_7$ मोक्षधर्म. — *Adhy. name:* Ś$_1$ K $V_1$ $B_{0-2.4.5}$ Da $D_{2-7}$ $T_1$ $G_{2.4}$ सेनानीतिः; $B_3$ विजिगीषमाणवृत्तं सेनानीतिः; $M_{1-3}$ सां($M_2$ सं)त्वस्तुतिः. — *Adhy. no.* (figures, words or both): $K_5$ 105; $Da_1$ 103 (as in text); $Dn_1$ 101; $Dn_2$ 102; S 104. — *Śloka no.:* Dn 41; $D_8$ 42.

### 104

☞ $D_1$ is missing for this adhy. (cf. v. l. 12. 79. 28).

1 $D_8$ om. the ref. — $^{a}$) $D_8$ corrupt. $K_3$ मृदो; $D_4$ मदो; $D_7$ T $G_{2-4}$ मृदुः (for मृदौ). $K_3$ $D_7$ T $G_{2-4}$ तीक्ष्णो; $D_4$ तीक्ष्णैर्. $B_1$ मृदौ कथं तीक्ष्णे कथं. — $^{b}$) $B_{1.2.5}$ पार्थिवे; $Dn_2$ $D_{2-6}$ °वः; $D_7$ S भारत. — $^{c}$) $K_4$ आरौ; $K_5$ Dn $D_{2.3.5.6}$ आदौ (for अरौ). $B_3$ नृपतिं. — $^{d}$) $G_2$ अभिवाद्य कृतांजलिः (= $3^{b}$).

2 $V_1$ $D_8$ om. the ref. $B_1$ reads $2^{cd}$ twice. — $^{c}$) $M_1$ बृहस्पतेस्त्वसंवादम्.

3 $G_2$ om. (hapl.) $3^{ab}$. — $^{a}$) $D_4$ वेदपतिम् (for देवपतिर्). $D_8$ बृहस्पतिं देवपतीम्. — $^{b}$) $D_4$ अतिवाद्य (for अभि°). — $B_1$ reads $3^{cd}$ twice. — $^{c}$) M उपसंगृह्य (for °संगम्य).

4 Before 4, $K_1$ Dn $D_4$ ins. इंद्र उवाच; $B_{2.4}$ Da वासव उवाच. — $^{a}$) $D_6$ आदितेषु (for अहि°). — $^{b}$) All MSS. (except Ś$_1$ $K_{1.4}$ $M_{1.3.4}$; $D_1$ missing) प्रवर्तयेयम् (for वर्तये°). $T_2$ जितेंद्रियः (for अतन्द्रितः). — $^{c}$) $K_1$ देवानां; $K_{3.5}$ $V_1$ B Da Dn $D_{2.3.5.7.8}$ T $G_{2-4}$ $M_{1.3.4}$ चैवैतान्; $D_4$ स्वेवेतान्;

सेनयोर्व्यतिषङ्गेण जयः साधारणो भवेत् ।
किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ॥ ५
ततो धर्मार्थकामानां कुशलः प्रतिभानवान् ।
राजधर्मविधानज्ञः प्रत्युवाच पुरंदरम् ॥ ६
न जातु कलहेनेच्छेन्नियन्तुमपकारिणः ।
बालसंसेवितं ह्येतद्यदमर्षो यदक्षमा ।
न शत्रुर्विवृतः कार्यो वधमस्याभिकाङ्क्षता ॥ ७
क्रोधं बलममर्षं च नियम्यात्मजमात्मनि ।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ॥ ८
प्रियमेव वदेन्नित्यं नाप्रियं किंचिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कण्ठायासं च वर्जयेत् ॥ ९
यथा वैतंसिको युक्तो द्विजानां सदृशस्वनः ।
तान्द्विजान्कुरुते वश्यांस्तथा युक्तो महीपतिः ।
वशं चोपनयेच्छत्रून्निहन्याच्च पुरंदर ॥ १०
न नित्यं परिभूयारीन्सुखं स्वपिति वासव ।
जागर्त्येव च दुष्टात्मा संकरेऽग्निरिवोत्थितः ॥ ११

C 12. 3805
B. 12. 103. 12
K. 12. 103. 12

---

D6 वै चेतान्; G1 चैवेनां ( for °वेनान् ). — d ) G1 उपागतः ( for °यतः ).

5 a ) K4 Da सेनाया ( for सेनयोर् ). Ś1 K4 व्यभिषंगेन; K1 M1. 3. 4 व्यतिषंगेन; Bo. 3. 4 D8 व्यतिसंगेन; D2. 3. 5. 6 प्रतिसंगेन; D7 T G व्यतिषंगे च ( for व्यतिषङ्गेण ). — b ) K1 जय-; K4 जया; Dn2 जप-. — c ) D6 -कुर्वाणां. T2 M मा ( for मां ). B1 प्रियो भवति भूतानां. — d ) D6 ज्वलिताः. D6 G2 श्री. T1 G2–4 प्रदीपिनी; G1 प्रतापिनीः.

6 a ) K1 अतो ( for ततो ). D2 -कामात्मं ( for °नां ). — b ) B1 संकुलः ( for कुशलः ). — c ) D5 om. from धानज्ञः up to द ( in $7^{d}$ ).

7 D5 om. up to द ( cf. v. l. 6 ). Before 7, K2–5 V1 B Da Dn D2–4. 6. 7 S ins. बृहस्पतिरुवाच. — a ) T2 कुशलो न ( for कलहेन ). K1 [ए]व; B Dn1 D3 [इ]च्छन् ( for [इ]च्छेन् ). — b ) B1 अपकार्यं च; D3. 7 T1 G1. 3. 4 M1. 3. 4 अपकारिणं; M2 उपकारिणः ( for अप° ). — c ) B1 om. from बाल up to बलम ( in $8^{a}$ ). Ś1 K4 बलं; K1. 2 बालं; D8 काल-; M4 पाल- ( for बाल- ). D7 T1 G3. 4 चैतद्; M ख्ये° ( for ह्ये° ). K3 D4 बालिशाचरितं ह्येतद्; Dn बालैरासेवितं ह्ये°. — d ) Ś1 यदामर्षो; K1 T2 यदमर्षं ( T2 °र्षा ); D8 अद्य मर्षो. Ś1 K1. 4 यदा( K1 °द )-क्षमः. — e ) Da विचरः; Dn2 D5 विधृतः; D2. 3 विहृतः; D6 विहृतः ( for विवृतः ). — f ) K3 -कांक्षतां; Dn2 -कांक्षति; D6 -कांक्षिता; D7 M2 -कांक्षतः; D8 -कांक्ष्य च ( for -काङ्क्षता ).

8 B1 om. up to बलम ( cf. v. l. 7 ). — a ) M4 क्रोध- ( for क्रोधं ). K3 D4 च दर्पं ( for अमर्षं ). B1 हर्षं च. K2. 5 V1 Bo. 2–5 Da Dn D2. 3. 5. 6. 8 क्रोधं भयं च हर्षं च. — b ) K2. 5 V1 B Da Dn D2. 3. 5. 6. 8 स्वयम्; D7 T2 G1–3 [आ]त्मानम् ( for [आ]त्मजम् ). M1. 3 आत्मना. — c ) K3 D4 अपि ( for उप- ).

9 a ) K1. 4 V1 D6 वदन्; G3 ददेन्. — c ) D2. 3. 5. 6 -वैरेषु ( for -वैरेभ्यः ). — d ) K2. 3. 5 V1 Bo. 2. 3. 5 Da Dn D2. 3. 5. 6. 8 कंठा( D2 कथा )यासांश्च; B1 कंठयोयासां; B4 कंठाघोषांश्च; D7 S कर्णजापं ( for कण्ठायासं ). B1 om. च.

10 a ) K2 अथ; B1 तथा ( for यथा ). K1 वैतंसिके; K4 वैनंसिको. — b ) Bo. 1. 4 D2. 3. 5–7 S -स्वरः; D8 -स्वतः ( for -स्वनः ). — c ) D7 M4 तं ( for तान् ). D2 वशंगस्; M4 वश्यं ( for वश्यांस् ). K3 तांस्तान्स भजते वश्यांस्. — d ) D4 महीमतिः ( for °पतिः ). — e ) K5 वशे; B1 वश्यं. D6 चापनयेच्; M2 नोप° ( for चोप° ). — f ) K1. 4 निहन्याश्च ( for °न्याच् ). T2 वा ( for च ). D5 G1 M4 पुरंदरः.

11 G1 repeats $11^{ab}$ after 11. — a ) Bo मा ( for न ). — b ) D4 सुखे. K1 T2 M2 स्वपति ( for स्वपिति ). B3 Da D6 G1 वासवः. — c ) K1 G1 जगत्येव; D8 जागर्तैव. K2. 3. 5 V1 Bo. 1. 3–5 Dn D2–8 S हि ( for च ). B2 Da स ( B2 प्र- ) जागर्त्येव दुष्टात्मा. — d ) K1 मंकुरो; K4 D3. 6. 7 T1 G3. 4 संकटे; Bo संहारे ( for संकरे ). K1 [ऽ]ग्नेरिव. V1 Bo. 2–5 Da T1 G3. 4 M1. 3 [उ]ज्झितः; D8 [उ]द्धृतः; M4 [उ]त्सितः ( for [उ]त्थितः ). B1 संक्षयेग्निमिवोग्नतः ( sic ). ❀ Cn: संकरोऽग्निचटत्कार इति मेदिनी । ❀ — After 11, G1 repeats $11^{ab}$; while G3 reads $14^{ab}$, repeating it in its proper place.

12 G3 om. $12^{ab}$. — a ) Cf. 12. 103. $22^{a}$. B1 अ- ( for न ). — c ) B5 विश्वास्योव; D8 °स्यौवा; G1 विश्वस्यैव ( for विश्वा° ). K1 -संन्यासो; K2 Dn D8 -संनार्थो; K3 D4 M -संनास्यो; K5 Da D2. 3. 5 -संधार्यो; V1 Bo. 3–5 -संनाद्यो; B1 -*नार्यान्; B2 -सं-

C. 12. 3806
B. 12. 103. 13
K. 12. 103. 13

न संनिपात्तः कर्तव्यः सामान्ये विजये सति ।
विश्वास्यैवोपसंन्यास्यो वशे कृत्वा रिपुः प्रभो ॥ १२
संप्रधार्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः ।
उपेक्षमाणोऽवज्ञाते हृदयेनापराजितः ॥ १३
अथास्य प्रहरेत्काले किंचिद्विचलिते पदे ।
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः ॥ १४
आदिमध्यावसानज्ञः प्रच्छन्नं च विचारयेत् ।
बलानि दूषयेदस्य जानंश्चैव प्रमाणतः ॥ १५
भेदेनोपप्रदानेन संसृजन्नौषधैस्तथा ।
न त्वेव चेलसंसर्गं रचयेदरिभिः सह ॥ १६
दीर्घकालमपि क्षान्त्वा विहन्यादेव शात्रवान् ।
कालाकाङ्क्षी यामयेच्च यथा विस्रम्भमाप्नुयुः ॥ १७
न सद्योऽरीन्विनिर्हन्याद्दृष्टस्य विजयोऽज्वरः ।
न यः शल्यं घट्टयति नवं च कुरुते व्रणम् ॥ १८

---

नान्वै; D6 -संधार्थो; D7 G3. 4 -सामान्यो; T1 -संनद्धो; T2 -संनान्यो; G1 -संनम्यो; G2 -संमान्यो (for -संन्यास्यो). — $^d$) K1 वशी-; D5 वशं (for वशे). B1. 2 रिपून्; B5 D7. 8 G रिपुं; Dn2 D2. 3. 5. 6 प्रियः (for रिपुः). Dn2 प्रभोः; M1. 3. 4 सदा. — After 12, Ś1 K1. 2. 4 ins.:

241* वशे कुर्याच्च शमयेत्तीक्ष्णान्कर्कशपीडनैः ।
स यथा नेष्यते राज्ञस्तीक्ष्णोपकरणक्षयः ।
हेतावीर्षुः फलेनेर्षुः स्याच्छक्र व्यवसायवित् ।
दोषेण गुणरूपेण द्विषतो यो जयेत्सदा ।

[(L. 1) K1 -पीडितैः (for -पीडनैः). —(L. 2) K1 सर्वथा (for स यथा). —(L. 3) K1 होमावीर्षुः फले वीर्षुः; K4 हेतावीर्ष्यः फलेतेर्षुः (for the prior half). K4 स्याचक्रव्यवसायवत् (for the post. half).]

13 $^a$) D8 संप्रहार्य (for °धार्य). D2 T2 महामात्यैर् (for सहा°). — G2 om. (hapl.) 13$^c$–14$^d$. — $^c$) Ś1 K2. 4 उपेक्षमाणे (K4 °नो); K1. 5 B1. 3 Da1 Dn2 D2. 4. 6. 8 उपेक्ष्यमाणो (K1 °णे) (for उपेक्ष°). K2–5 V1 Bo. 1. 3–5 Da Dn D2–6. 8 M [ऽ]वज्ञातो; B2 D7 T G (G2 om.) विज्ञातो (for ऽवज्ञाते). — $^d$) G1 [अ]पराधितः (for °जितः).

14 G2 om. 14 (cf. v. l. 13). G3 reads for the first time 14$^{ab}$ after 11. 14$^{ab}$ = B. 12. 140. 44$^{cd}$. — $^b$) K3 मृधे (for किंचिद्). Ś1 K1 विलसिते (for विचलिते). K5 V1 Bo. 2. 4. 5 Da D2. 3. 5. 6. 8 M मृधे वि(K5 किंचिद्वि-; M1. 3. 4 प्रथेर्वि-; M2 वृथे वि)चलितो यदा (B4 °था); B1 मृधेष्ववलिप्तोबलो यदा; D7 T1 G1. 3 (both times). 4 विधेर्विचलितो यथा (G3 [first time]. 4 यदि); T2 वृत्तेर्विचरितो यथा. — K4 Dn2 om. (hapl.) 14$^d$–15$^c$. — $^d$) K2. 3 आत्मकारिभिः (for आप्त°).

15 K4 Dn2 om. 15$^{abc}$ (cf. v. l. 14). — $^a$) D6. 7 S आदिमध्यावसानज्ञान् (D6 °नंज्ञः; M3. 4 °नज्ञैः). — $^b$) D2. 3. 5. 6 प्रच्छन्नश्च; T2 G1 पृच्छतश्च (for प्रच्छन्नं). Ś1 K1. 2 विवर्जयेत्; K5 B (except B1) Dn1 D3. 5. 6. 8 विधारयेत्; D2 ववार° (for विचार°). — $^c$) K3 V1 B Da D2–6. 8 तस्य (for अस्य). D7 S बलानि दूषयंतोस्य. — $^d$) K5 V1 Bo. 2–5 Da Dn D2. 3. 5. 6. 8 जानन्नेव (B5 °न्नेष; D8 °न्नैव); B1 परान्नेव; D7 S जानंतश्च (for जानंश्चैव).

16 $^b$) Ś1 K1 विसृजन्; K4. 5 V1 B D (except D4; D1 missing) S संसृ(M4 °वृ)जेद् (for °जन्). Ś1 D4 औषधीस्; T2 °धेस्. — $^c$) K3. 5 B4 Dn2 D2 G2 न त्वेवं; B1 नत्रवत्; D4 न चेव; D6 नन्वेनं (for न त्वेव). K1. 2 वेल-; K3-5 V1 B D (D1 missing) S खलु (for चेल-). D8 -संसर्गे. — $^d$) All MSS. (except Ś1 K1. 4; D1 missing) रो(B1 वा)चयेद् (for रच°).

17 $^a$) K1 क्षंत्वा; K5 क्षांत; B1 क्षांत्यं; Dn D3 (before corr.) [ई]क्षेत; D2. 6 क्षांता; D5 [इ]च्छेत; D7 क्षांत्या (for क्षान्त्वा). — $^b$) K1. 2 Dn2 शत्रवान्; V1 B2 Da D4 शात्रवं. D7 S निगृ(D7 M1. 3. 4 °ग्रा)ह्य एव शत्रवः. — $^c$) D7 T1 G कालकांक्षी. K2. 3. 5 V1 B Da Dn1 D2–6. 8 हि (K5 V1 B1. 2. 4. 5 Da D8 च; Bo om.; D4 न) क्षपयेद्; K4 यापयेश्च; Dn2 हि यापेत; D7 S च यत्तः (T2 स यत्नः) सन् (for यामयेच्च). — After 17$^c$, D7 S ins.:

242* उपासीत शचीपते ।
तथा प्रियं च वक्तव्यं.
[M2 om. line 2.]

— M2 om. 17$^d$. — $^d$) K3 D4 यदि (for यथा). Ś1 K2. 3. 5 V1 B Da Dn D2–6. 8 विश्रंभम्. D7 S (M2 om.) आप्नुयात्.

18 $^a$) Dn1 संघातान्; Dn2 संथाप्तन् (for सद्योऽरीन्). K1 विहन्या*; K3 निर्हन्यात् (submetric); B2. 3 Dn D5 विहन्याच्च (for विनिर्हन्याद्). D2. 3. 6

प्राप्ते च प्रहरेत्काले न स संवर्तते पुनः ।
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपुं प्रति ॥ १९
यः कालो हि व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणम् ।
दुर्लभः स पुनः कालः कालधर्मचिकीर्षुणा ॥ २०
और्जस्थ्यं विजयेदेवं संगृह्णन्साधुसंमतान् ।
कालेन साधयेन्नित्यं नाप्राप्तेऽभिनिपीडयेत् ॥ २१
विहाय कामं क्रोधं च तथाहंकारमेव च ।
युक्तो विवरमन्विच्छेदहितानां पुरंदर ॥ २२
मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम ।
मायाश्च विविधाः शक्र साधयन्त्यविचक्षणम् ॥ २३
निहत्यैतानि चत्वारि मायां प्रतिविधाय च ।
ततः शक्नोति शत्रूणां प्रहर्तुमविचारयन् ॥ २४
यदैवैकेन शक्येत गुह्यं कर्तुं तदाचरेत् ।
यच्छन्ति सचिवा गुह्यं मिथो विद्रावयन्त्यपि ॥ २५

C. 12. 3819
B. 12. 103. 26
K. 12. 103. 26

---

न सद्यो विनिहन्याच्च. — b) K3 D4 शेषस्य; K4 दुष्टस्य; K5 द्रष्टस्य; V1 B Da Dn D2. 3. 5. 6. 8 द्रष्टव्यो; D7 S सृष्टस्य (for दृष्टस्य). D8 विनयो (for विजयो). All MSS. (except Ś1 K1. 2. 4; D1 missing) ध्रुवः (for ऽज्वरः). — c) K3. 5 V1 B Da Dn D2. 3. 5. 6. 8 न शल्यं वा; D7 S भूयः शल्यं (D7 G2 °क्यं; G4 °लं) (for न यः शल्यं). K3–5 Bo. 1. 5 Da Dn D5. 7 T G M1 घटयति; D4 घडयति; D8 द्दढयति (for घट्ट°). — d) K1 न वचनं (hypermetric); K3. 5 V1 B Da Dn D2. 3. 5. 6. 8 न वाचा; D4 नत्रं न (for नत्रं च). D4 ध्रुवं (for व्रणम्).

19 a) M1. 3 वा (for च). — b) K5 V1 B Da Dn D2. 3. 5. 6. 8 च; D7 T G हि (for स). K3 D4 समं (for स सं-). M नैव तं व्यतिवर्तयेत्. — M4 om. 19cd. — c) D4 विप्रेंद्र; G2 रूपेण (for देवेन्द्र). — d) V1 B2 Da Dn M1. 3 रिपून् (for रिपुं). K5 D2. 3. 5. 6. 8 प्रभो (for प्रति).

20 With 20, cf. Kauṭilya, p. 255 end; Pañcatantra (Koseg.) 3. 134. — a) K5 V1 B D (except Dn; D1 missing) T G यं (for यः). K5 V1 B D (D1 missing) S transp. कालो and हि. Ś1 K1. 2. 4 यं (K1 यः) कालो नात्यतिक्रामेत्. — b) Bo om. काल. — c) K3. 5 V1 B Da Dn D2–6. 8 तेन; D7 T G M2 भूयः; M1 लब्धः; M3. 4 लब्धुं (for कालः). — d) K3. 5 V1 B D (D1 missing) G M2 कालः (D4 G3 °ल-) कर्म-; M1. 3 भूयः काल-; M4 भूयः कर्म- (for कालधर्म-). K1 -चिकीर्षणा; Da °र्षया; D7 S °र्षतः (M2 °तां) (for °र्षुणा).

21 a) K1 V1 औजस्वं; K3 ऊर्जेन; K4. 5 Bo. 3–5 Da Dn D8 ओजश्च; B1. 2 ओजसा; D2. 3. 5. 6 तेजश्च; D4 ऊर्जस्वां; D7 T1 G M2 औजस्यं; T2 सौजन्यं; M1. 3. 4 और्जस्यं (for °स्थ्यं). K5 V1 B1. 2 Da Dn D2. 4 विनयेद्; D8 विलयेन्; D7 S जनयेद् (for विज°). K4 Dn D7 S एव; K5 V1 Bo. 3–5 D2. 3. 5. 6. 8 नित्यं (for एवं). — b) D2 संगृह्णान्; T2 स गृह्णन्. B4 काल- (for साधु-). K1 -संस्मृतान्; K5 Bo. 1. 3. 5 Da Dn D2–6. 8 -संमतं; B4 -संमितं (for -संमतान्). — c) K5 V1 B Da Dn D2. 3. 5. 6. 8 अकाले (for कालेन). Da साधयन्. K3 D4. 7 S (except G2 M2) कृत्यं; K5 Dn2 D2. 3. 5. 6 मित्रं; V1 B Da Dn1 D8 नापि (for नित्यं). — d) K5 V1 B Da Dn D2. 3. 5. 6. 8 न च प्राप्ते (B2 °प्तं) प्रपीडयेत्; D7 S अप्राप्तो न हि (T2 M2 °प्ते नाभि-; M1. 3. 4 °प्ते नापि) पीडयेत्.

22 a) K4 विहायः. M1. 3 transp. कामं and क्रोधं. — b) M1. 3 हुंकारम् (for [अ]हं°). — c) Da D6 विचरम्; D4 निवरम् (for विव°). B2 अन्विष्येद्. — d) K3 पुरंतर; K5 V1 B Da Dn D2. 3. 5. 6. 8 सुदा नृपः; M सदा नरः (for पुरंदर).

23 a) D7 S अदाक्ष्यं (G3. 4 °क्ष्यं) (for मार्दवं). K5 T2 G1 दंडम्; D7 दंभ. G1 आलस्य-. — b) B1 प्रमादांश्च; D4. 7 M4 °दं च; G4 °दस्य. M सुरेश्वर (for सुरोत्तम). — c) D2. 6 G1 माया. K2. 3 D4. 7 S च विहिताः; K5 V1 B Da Dn D2. 3. 5. 6. 8 सुविहिताः (D2. 6 °ता) (for च विविधाः). — d) K3–5 V1 B Da Dn D2–6. 8 सा(D6 सी)दयंति; D7 S शातयंति (for साध°). K1 [अ]विचक्षतां; G1 विचक्षणं.

24 a) Ś1 विहन्य; K4 विहत्य; D4 विहत्वा (for निहत्य). — b) D4 माया. K2. 5 V1 B Da Dn1 D4. 8 -विहाय; Dn2 D2. 3. 5 -विहत्य; D6 -विहन्य (for -विधाय). — d) K1 प्रहंतुम्. K1. 3 D4 अविधारयन्; K5 D5 °चारयेत् (D5 °यत्); D6 प्रविचारयन्.

25 a) K V1 Bo. 3. 4 Dn D3. 5 G2. 4 M यदेव; B1. 2 Da यदि च; T2 यद्यद् (for यदैव). D7 T1 G2–4 M2 [ए]तेन (for [ए]केन). K4 D8 शक्येन; Da सततं (for शक्येत). — b) D7 वक्तुं (for कर्तुं). V1 यदा (for तदा). — d) D4 मिथो. K2. 5 V1 B Da Dn D2–6. 8 T2 G1 M विश्रा(M °स्रा)वयंति; D7 T1 G2–4 विध्वंस° (for विद्राव°). M1. 3. 4 च (for [अ]पि).

C. 12. 3820
B. 12. 103. 27
K. 12. 103. 27

अशक्यमिति कृत्वा वा ततोऽन्यैः संविदं चरेत् ।
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ॥ २६
भेदं च प्रथमं युञ्ज्यात्तूष्णींदण्डं तथैव च ।
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा ॥ २७
प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः ।
युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः ॥ २८
प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रमुपसेवेत न तु जातु विशङ्कयेत् ॥ २९
स्थानानि शङ्कितानां च नित्यमेव विवर्जयेत् ।
न च तेष्वाश्वसेद्द्रुग्ध्वा जाग्रतीह निराकृताः ॥ ३०

न ह्यतो दुष्करं कर्म किंचिदस्ति सुरोत्तम ।
यथा विविधवृत्तानामैश्वर्यममराधिप ॥ ३१
तथा विविधशीलानामपि संभव उच्यते ।
यतेत योगमास्थाय मित्रामित्रानवारयन् ॥ ३२
मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः ।
मातीक्ष्णो मामृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ॥ ३३
यथा वप्रे वेगवति सर्वतःसंप्लुतोदके ।
नित्यं विवरणाद्बाधस्तथा राज्यं प्रमाद्यतः ॥ ३४
न बहूनभियुञ्जीत यौगपद्येन शात्रवान् ।
साम्ना दानेन भेदेन दण्डेन च पुरंदर ॥ ३५

---

26 a) Dn1 असेव्यम् (for अशक्यम्). Ś1 K1. 2. 4 D7 अपि (for इति). T2 मत्वा (for कृत्वा). B1 M2 च; M1. 3. 4 तु (for वा). T1 G3. 4 अशक्या मित्र-कृत्या वा. — b) D7 T G तदा (T2 G1 °द्)न्यैः (for ततोऽन्यैः). G1 सविदं. — c) ❀ Cn: ब्रह्मदंडं पुरोहितद्वारमभिचारम् । ❀ — d) D4 om. दृष्टेषु. K1. 2. 4. 5 चतुरंगिनीं (K5 °णी).

27 a) K4 भेदे; D2 भिदं. D3. 5 युज्यात्; D7 T G1. 3. 4 वि(T2 विं)द्यात् (for युञ्ज्यात्). — b) Dn तूष्णीमपि (for तूष्णींदण्डं). — d) B1 राजंस् (for the first तस्मिंस्).

28 D6 om. 28. — a) K1 प्रतिपातं; B5 काल-पातं (for प्रणि°). M4 गच्छेथाः. — b) K4 बलीयशः; D2 बलियसः; D7 T1 G2–4 गरीयसः. — c) D2. 3 युक्तस्य (for युक्तोऽस्य). — d) Ś1 प्रमादतः; D2 °द्यत.

29 b) Ś1 K2. 4 ध्रुवं; T2 वदन् (for ब्रुवन्). — c) K2. 3. 5 V1 Da Dn D2. 3. 5. 6. 8 T2 अपि (for उप-). — d) K5 B D2. 3. 5. 6. 8 न च; D4 न नु; T2 न हि (for न तु).

30 a) D5 स्थानाभि- (for °नि). D7 T G तु (for च). — b) Bo एतद् (for एव). D4 G2 विसर्जयेत् (for विव°). — c) K2 D2. 3. 8 द्रोग्धा; K3 D4 M2. 4 द्रुग्धा; K4 B3 Da D6 दोग्धा; K5 B1 Dn D5 G2 राजा; V1 Bo द्रुग्ध्रा; B4 द्रोग्ध्रा; D7 ऊर्ध्वं; T1 दुग्ध्वा (for द्रुग्ध्वा). — d) K4 जाग्रते ह; M1 जाग्रंतीह. Ś1 D7 G1 निराकृतः; T1 G3. 4 °कृता.

31 a) K4 न हि ते (for न ह्यतो). D7 T1 G2–4 दुष्कृतं (for दुष्करं). — b) M4 कश्चिद् (for किंचिद्). B1 सुरोत्तमः. — B4 om. (hapl.) 31cd. — d) M अमरोत्तम (for °राधिप).

32 a) B4 यथा (for तथा). B2 -वृत्तानाम्; Dn1 -नाशानाम् (for -शीला°). — c) K2. 5 V1 B Da Dn D2. 3. 5. 6. 8 यतते (B1 D6 °तो); K4 एतेत (sic); D7 T2 प्रयतोद्; T1 G M प्रय(M2 °प)तेद् (for यतेत). D4 यागम् (for योगम्). — d) D7 T G2–4 M अधारयन् (M1. 3 °त्) (for अवा°). K3. 5 Dn D4. 6 मित्रामित्रं (D4 °त्रे) विचारयेत् (K3 °यत्); V1 B Da D2. 3. 5 °मित्रं न वा(D2. 3. 5 निवा)रयेत्; G1 °मित्र-मिती * यन्.

33 Cf. 12. 56. 21; 103. 33. K3 om. 33a–36b. — b) T2 चोद्विजते. K4 G1 जनाः; B5 नरः; D6 पुनः. — c) D5 ना- (for the second मा-). — d) M मा च लोभे मनः कृथाः.

34 K3 om. 34 (cf. v. l. 33). — a) B1 यथा चाप-; D7 G1 M2 यथा वद्रे; G4 यथा वप्र-; M1. 3 अथावद्रे. K5 वेगवंति; D7 G1–3 वेगवती. — b) D6 संप्लुतः (for सर्वतः-). D2 सु- (for सं-). — c) Ś1 विदारणाद्; K1 Dn2 T2 G1 M1–3 विचा°; K4. 5 V1 B1 D7 T1 G2–4 M4 विच° (for विव°). D8 वेधस्; M1. 3 बाधा; M2 बोधात्; M4 बाधां (for बाधस्). — d) D6 राजं; M4 राज्ञः.

35 K3 om. 35 (cf. v. l. 33). — a) Ś1 K4 अपि युंजीत; D7 T G उ(G1 अ)परुध्येत; M उपरुंधेत (for अभियुञ्जीत). — c) Bo. 4. 5 G2 साम्ना भेदेन दानेन. — d) K4 D2 पुरंदरः (D2 °रं).

एकैकमेषां निष्पिषञ्शिष्टेषु निपुणं चरेत् ।
न च शक्तोऽपि मेधावी सर्वानेवारभेन्नृपः ॥ ३६
यदा स्यान्महती सेना हयनागरथाकुला ।
पदातियन्त्रबहुला स्वनुरक्ता षडङ्गिनी ॥ ३७
यदा बहुविधां वृद्धिं मन्यते प्रतिलोमतः ।
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ॥ ३८
न साम दण्डोपनिषत्प्रशस्यते
न मार्दवं शत्रुषु यात्रिकं सदा ।
न सस्यघातो न च संकरक्रिया
न चापि भूयः प्रकृतेर्विचारणा ॥ ३९
मायाविभेदानुपसर्जनानि
पापं तथैव स्पशसंप्रयोगात् ।
आप्तैर्मनुष्यैरुपचारयेत
पुरेषु राष्ट्रेषु च संप्रयुक्तः ॥ ४०
पुराणि चैषामनुसृत्य भूमिपाः
पुरेषु भोगान्निखिलानिहाजयन् ।
पुरेषु नीतिं विहितां यथाविधि
प्रयोजयन्तो बलवृत्रसूदन ॥ ४१

C. 12. 3835
B. 12. 103. 42
K. 12. 103. 42

---

36 K3 om. 36ab (cf. v. l. 33). — a) K1 D7 S निष्पेषेच् (T1 °षैः; T2 G1 °षाच्; M4 °ष्याच्); K2. 5 V1 B Da Dn D2–6. 8 निष्पिष्य (for निष्पिषन्). — c) K5 V1 B Da Dn D3. 5–8 न तु; D2 G1 M2 न तु; T2 न हि (for न च). V1 D3. 5 शक्नोति°; Dn1 D2. 6 शक्नोति (for शक्तोऽपि). — d) D7 S [आ]चरेद् (for [आ]रभेन्). K2. 3 D4 नृप; Da D7 S बुधः.

37 a) D7 T G यथा (for यदा). M2 [अ]स्य (for स्यान्). K1 महतीं. — b) K1 हत-; D5 हया. B1 -रथाकुलाः; Dn1 °कुल. — c) D8 पदातिर् (for °ति-). K5 -यत्न-; B1 D8 यत्र (for -यन्त्र-). K1 -बहला; D6 -बहुलान्. ❀ Ca: मंत्राभियंत्रबहुले इति पाठः साधुः । ❀ — d) K1 स्वानुरक्ता; K2. 3. 5 V1 B Da Dn D2. 3. 5. 6. 8 M2 अनु° (for स्वनु°). K8 D4 पताकिनी; D5 षडंगिणी; G2 क्षसंगिनी. ❀ Cn: षडङ्गिनी रथतुरगमातङ्गपदातिकोशवणिक्पथवती । ❀

38 a) D7 T1 G1. 3. 4 यथा (for यदा). K4 D2 बहुविधा. K4 B1 Da वृत्तिं; M ऋद्धिं (for वृद्धिं). — b) D7 T G प्रतियोगतः (for °लोमतः). — c) D7 G2–4 काले (for तदा). D7 T1 G2–4 विहृत्य; G1 [अ]पि वृत्य (for विवृत्य). — d) D7 T G अरीणाम् (for दस्यूनाम्). K1. 3 D4 अविधारयेत् (K1 °यन्); K4. 5 °चारयेत्. D2. 3. 5. 6 दस्यूनानुविचारयन् (D5 °येत्).

39 a) G1 दानोपनिषत् (for दण्डो°). ❀ Ca: दंडोपनिषद्, आर्षः संधिः । ❀ — b) Dn2 D6 M2 यांत्रिकं (for यात्रिकं). Dn2 तदा (for सदा). — c) K4 तस्य घातो; V1 B1. 2 शस्यघातो; Dn1 सस्यघाते; T2 G1 चास्य घातो (G1 °ते). B1. 2. 5 शंकर- (for संकर-).

40 b) K4 Bo. 3–5. Dn D2. 3 (by corr.). 5. 6. 8 तथैव पापं (by transp.); K5 तथैव माया-; D3 (before corr.) तथैव पाप-; D7 T1 G2–4 वाचं तथैव. K1. 2 B1 Da1 स्पर्श(K1 स्पृश-; K2 स्पृश )संप्रयोगाद् (B1 °न्); K3 [अ]स्य सुसं°; K4 Bo. 5 D8 यशसा प्रयोगात् (B5 °न्); K5 -शतसं°; V1 B2 Da2 स्पर्श-प्रयोगात् (V1 °न्); B3. 4 Dn D2. 3 (by corr.). 5 न यशः प्रयोगात् (B3 °न्); D3 (before corr.) [अ]पयशः प्र°; D4 [अ]स्य स्वस°; D6 चयनाप्र°; D7 T1 G2–4 प्रथमं प्र°; T2 प्रशमप्र°; G1 M4 प्रशमं प्रयोगान्; M1–3 प्रथमं विप्रयोगात् (for स्पशसंप्र° as in S1 only). — c) B1 D7 प्राप्तैर्; M2 आप्तं. D7 T G1. 3. 4 उपचारयीत. — d) D4 सुरेषु (for पुरेषु). K3 D4 संप्रयुक्तैः; K5 V1 Bo. 1. 3–5 Dn D2. 3. 5. 8 °युक्तान्; D6 संघयुक्तान्; D7 T G संप्रयुक्तं (for °युक्तः).

41 D8 om. 41. — a) K3. 5 V1 B Da Dn2 D2–5 M पुरापि चैषा(M °ना)म्; D7 T1 G2–4 पुरा विजे(T1 °चे)तान्; T2 G1 पुरापि ये (G1 ए-) तान् (for °णि चैषाम्). K5 B3 D3. 5. 6 अनुसृज्य; D4 उपसृत्य (for अनु°). B5 भूमिपः. — b) V1 Bo. 5 D4 परेषु (for पु°). D7 पापान्; T1 G2–4 भागान्; M4 भोगं (for भोगान्). K2. 3. 5 V1 B Da Dn D4–6 अखिलान्; D2. 3 अखिलाः (for निखिलान्). K3 Da D4 इहार्जयन्; K5 B3 Dn1 D7 T G M2 जयंति; Bo. 4. 5 D6 M1. 3. 4 जयंति हि (M1. 3. 4 ह); Dn2 क्षयंति; D2. 3. 5 क्षयंति हि (for इहाजयन्). — c) V1 B1 D2–5. 7 S (except T2 M2) परेषु (for पुरेषु). G3 नीतिर्. T1 G2–4 नियतां; T2 G1 निहता (for विहितां). T2 G1 यथावद् (for यथाविधि). — d) K1 बलं; M1. 3. 4 वलु-. K4 -वृत्रसूदनः; T2 G1 -वृत्रहंतः (G1 °ता).

42 a) D4 विधाय; D6 यदा नि· (for प्रदाय).

# ११९

C. 12. 4331
B. 12. 119. 1
K. 12. 119. 1

भीष्म उवाच ।

एवं शुनासमान्भृत्यान्स्वस्थाने यो नराधिपः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ १
न श्वा स्वस्थानमुत्क्रम्य प्रमाणमभि सत्कृतः ।
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रपद्यते ॥ २
स्वजातिकुलसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
प्रकर्तव्या बुधा भृत्या नास्थाने प्रक्रिया क्षमा ॥ ३
अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ।
स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ॥ ४
शरभः शरभस्थाने सिंहः सिंह इवोर्जितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ ५
कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।

---

K5 V1 B Da Dn D2-3 S ( G3 missing ) चाश्व- ( G1 वाश्वं- ) ( for अश्व- ). —$^{b}$) D5 वीरारोहेन; G1 वरारोहेण ( for वीरारोहेण ). — After $28^{ab}$, Da1 reads 12. 119. $1^{b}$ ( for the first time ), repeating it in its proper place. —$^{c}$) K4 संग्रहीत-. —$^{d}$) D8 वसं- धुराः ( sic ). Ś1 K1. 2. 4 Da1 D1 कृत्स्नां जेतुं वसुंधरां.

Colophon : G3 missing. — *Sub-parvan :* Ś1 K V1 B Dn D1-3. 5. 7 T G1. 2. 4 M राजधर्म. — *Adhy. name :* K5 V1 B Da2 D2-6 ऋषिसंवादः; D1 ऋषि- संवादः; D7 T1 G2. 4 कुशलगु( G2 °ग )णप्रशंसा; M1-3 ऋषिसंवादे यौधलक्षणं. — *Adhy. no.* ( figures, words or both ): B1 108; B3. 4 Dn1 117; Da1 Dn2 118 ( as in text ); D2 114; D7 S ( G3 missing ) 120; D8 116. — *Śloka no. :* Da1 29; Da2 Dn D8 28.

## 119

☞ G3 is missing for this adhy. ( cf. v. l. 12. 112. 1 ).

1 D8 om. the ref.; T2 G2 श्रीभीष्मः. —$^{a}$) Da1 शुभान्समान्; D7 T G1 गुणयुतान्; G2 M गुणो- पमान् ( for शुनासमान् ). G4 तस्माच्छुगुणमान्भृत्यान्. — Da1 reads $1^{b}$ after 118. $28^{ab}$. —$^{b}$) Ś1 K1. 4 B4 D1 श्व( K1 श्वा-; B4 स )स्थाने यो; K5 Dn स्वे स्वे स्थाने; V1 B0-3. 5 D2. 3. 5. 6. 8 स्वे स्थाने यो ( for स्वस्थाने यो ). D2. 3. 5. 6. 8 महीपतिः; D7 S ( G3 missing ) नरे( D7 T2 G1. 4 जने )श्वरः. —$^{c}$) D4 ( also as in text ) कृतिषु; M4 भृत्येषु ( for कृत्येषु ). —$^{d}$) Da D3. 8 राजा; M2 राष्ट्र- ( for राज्य- ).

2 $^{a}$) K5 स्व-; D7 G1. 4 वा ( for श्वा ). Ś1 K1. 2. 4 D1. 4 संस्थानम्; V1 B Dn D3. 5. 6. 8 T1 M2. 4 स्वं स्थानम् ( for स्वस्थानम् ). Da न स्वार्थं स्थानमुत्क्रम्य. —$^{b}$) K5 V1 B4 प्रमाणयति ( for °णमभि ). K1 D4 अति; G1. 2 अपि ( for अभि ). D7 S ( except G4; G3 missing ) सत्कृतं ( for सत्कृतः ). — K4 repeats $2^{cd}$ after $3^{ab}$. —$^{c}$) V1 B3-5 D2 आरोप्य ( for आरोप्यः ). B1 स्वकस्थानाद्. —$^{d}$) B3 वक्त्रस्य ( for उत्क्रम्य ). B0. 5 Dn D5 प्रमाद्यति; B1 प्रपद्यत; Da प्रमौद्यति ( sic ) ( for प्रपद्यते ). K5 व्युत्क्रमेण प्रयोजयेत्; D2. 3. 8 उत्क्रा( D8 °त्क्र )मादुत्प्रमाद्यति.

3 $^{a}$) K3 सभृत्य- ( for स्वजाति- ). K2. 3. 5 V1 B D ( except D1 ) S ( G3 missing ) -गुण- ( for -कुल- ). —$^{b}$) D3 स्वे स्वे; M2 येषु ( for स्वेषु ). B2 स्था- नेषु; B5 कर्मणि; T G1. 2. 4 धर्मेषु ( for कर्मसु ). K5 Dn संस्थिताः. — After $3^{ab}$, K4 repeats $2^{cd}$. —$^{c}$) T2 प्रनर्तव्या ( for प्रक° ). K3 D4 नृपैर्; D5 बुद्धैर्; G1. 2 स्वया; M2 युधा ( for बुधा ). K1 कृत्या; D7 जात्या ( for भृत्या ). K5 Dn ह्यमात्यास्तु ( K5 °श्च ); B3 वधामृत्या ( sic ) ( for बुधा भृत्या ). —$^{d}$) K3 स्वस्थाने ( for नास्थाने ). B0 M2 प्रक्रियाः; B3 स्वक्रिया. K3 V1 B0-3 D7 T1 G1. 4 M1. 3. 4 क्षमाः. K5 B2 m. 4. 5 D2. 3. 5. 6. 8 नास्थानेषु ( D2. 3. 6 नानास्थाने ) क्रियाः क्षमाः ( D2 °मा ); T2 G2 स्वस्थाने प्रक्रियाः क्षमाः. ❀ Ca : प्रक्रिया अधिकारः । ❀

4 K3 om. $4^{a}$-$8^{b}$. —$^{a}$) D7 S ( G3 missing ) अनुकूलानि ( for °रूपाणि ). Da1 अनुकर्माणि रूपाणि. —$^{c}$) K5 V1 B Da Dn D2. 3. 5. 6. 8 M -संपन्नो ( for -संपन्नं ). —$^{d}$) V1 अवाश्नुते; G1 उपश्नुते ( for उपा- श्नुते ). D4 राज्यस्य फलमश्नुते.

5 K3 om. 5 ( cf. v. l. 4 ). —$^{a}$) K1 शरभश्च ( hypermetric ). —$^{b}$) Da2 om. सिंह. D7 T G1. 2. 4 इवोच्छ्रितः; M1. 3. 4 °ज्झितः ( for °र्जितः ). —$^{c}$) Ś1 M4 [अ]स्थाप्यो ( for स्थाप्यो ).

6 K3 om. 6 ( cf. v. l. 4 ). —$^{a}$) T2 सुरूपेषु ( for

प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ ६
यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ ७
न बालिशा न च क्षुद्रा न चाप्रतिमितेन्द्रियाः ।
नाकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ॥ ८
साधवः कुशलाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षा नराः स्युः पारिपार्श्वकाः ॥ ९
न्यग्भूतास्तत्पराः क्षान्ताश्चौक्षाः प्रकृतिजाः शुभाः ।
स्वे स्वे स्थानेऽपरिक्रुष्टास्ते स्यू राज्ञो बहिश्चराः ॥ १०
सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥ ११
यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥ १२
एवमेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुंधराम् ॥ १३
नावैद्यो नानृजुः पार्श्वे नाविद्यो नामहाधनः ।

C. 12. 4344
B. 12. 119. 14
K. 12. 119. 14

---

[अ]नुरू°). $D_5$ कर्मसिद्धासुरूपेषु. —$^{b}$) $K_1$ $M_2$ न्यस्त·; $K_{4.5}$ $D_{2.3.5.6.8}$ न्यस्य; $T_2$ स्थाप्या; $M_4$ न्यस्ता (for न्यस्या). $K_5$ Bo.$_{2.4.5}$ Da $D_{1-3.5.6.8}$ $T_1$ $G_4$ भृत्यान् (for भृत्या). —$^{c}$) $D_5$ प्रतिलोम्ये; $D_7$ T $G_{1.4}$ $M_2$ °लोमा (for °लोमं). $M_{1.3.4}$ प्रतिलोम्या ($M_4$ °मे) न भृत्या ($M_4$ °त्ये) स्वे. —$^{d}$) $G_1$ om. स्थाप्याः. $V_1$ Bo$_{-2.5}$ Da $Dn_2$ $D_{2.3.5.6}$ $G_2$ $M_{2.4}$ ·फलैषिणः.

7 $K_3$ om. 7 (cf. v. l. 4). —$^{b}$) $D_4$ प्रातिलोमं; $D_7$ $T_1$ $G_4$ $M_4$ प्रतिलोमान्. $Ś_1$ $K_4$ $D_1$ $M_2$ नराधिप. —$^{c}$) $D_7$ T $G_{1.4}$ M [ऽ]बुद्ध्या (for ऽबुद्धिर्). —$^{d}$) $D_7$ T $G_{1.2.4}$ transp. न and स. $T_2$ $G_{1.2.4}$ M रंजयति.

8 $K_3$ om. 8$^{ab}$ (cf. v. l. 4). —$^{b}$) $K_5$ $V_1$ B D (except $D_1$) S ($G_3$ missing) नाप्रा($G_1$ °प्र)ज्ञा नाजितेंद्रियाः. —$^{c}$) $D_7$ S ($G_3$ missing) जनाः (for नराः). $B_1$ Dn सर्वे (for पार्श्वे). —$^{d}$) $D_5$ प्राप्या (for स्थाप्या). $K_5$ $V_1$ B $D_{2.3.5-8}$ $T_1$ $G_{2.4}$ M गुणैषिणा; $Da_1$ फलैषिणा; $T_2$ जयैषिणा (for हितैषिणा). Dn स्थाप्या गुणगणैषिणः ($Dn_1$ °णा).

9 $^{a}$) $K_3$ $B_{1.2}$ Da $Dn_1$ $T_2$ $G_{1.2}$ M कुलजाः (for कुशलाः). $D_1$ corrupt. —$^{b}$) $D_1$ जानवंतो (for ज्ञान°). —$^{c}$) $M_4$ अक्षुद्रः. $G_1$ अक्षुद्राः स्युर्नरा राजन्. —$^{d}$) K (except $K_4$) $V_1$ B Da Dn $D_{2.3.5-8}$ $T_1$ $G_{2.4}$ स्युर्नराः (by transp.); $T_2$ $G_1$ वर्तंतः. Bo.$_{2.4.5}$ $Da_2$ Di पारिपार्श्विकाः ($D_1$ °श्वंकः); $D_4$ S ($G_3$ missing) परिपार्श्वकाः (T $G_{1.4}$ $M_{1.3.4}$ °तः); Ca पारिपार्श्वकाः (as in text).

10 $D_4$ om. 10. —$^{a}$) $D_7$ S ($G_3$ missing) उद्भूतास् (for न्यग्भूतास्). $K_3$ Dn $D_7$ $T_1$ शांताश्; $D_1$ क्षांत्याश्; $M_{1.3}$ क्षंताश् (for क्षान्ताश्). —$^{b}$) $Ś_1$ $K_1$ दक्षाः; $Ś_1$ (*inf. lin.*) चाराः; $Dn_1$ $T_1$ $G_4$ $M_4$ चोक्षाः (for चौक्षाः). $K_{3.5}$ $B_2$ $Dn_2$ $D_{2.3.5-8}$ प्रकृतिजैः; $Dn_1$ प्रकृतितः (for °जाः). $G_1$ शुभैः (for शुभाः). —$^{c}$) $K_3$ $B_{1.2}$ Da $Dn_1$ $D_7$ S ($G_3$ missing) [ऽ]नुपक्रुष्टास्; $V_1$ [ऽ]नुपक्रांतास् (for ऽपरिक्रुष्टास्). $K_5$ Bo.$_{3.5}$ $D_{2.3.5.6.8}$ स्वस्थानानु($D_8$ °न्यु)पसृ($K_5$ °संपृ)ष्टास्ते; $B_5$ (marg.) स्वे स्वे स्थानेषूपकृष्टास्; $Dn_2$ स्वस्थानानपकुष्टा ये. —$^{d}$) $K_3$ $B_1$ तेस्य (for ते स्यू). $K_3$ राजन्; $K_5$ $V_1$ Bo.$_{2-5}$ Da $Dn_1$ $D_{3.5.6.8}$ राज्ञां (for राज्ञो). $D_1$ बलिश्चराः. $Dn_2$ ते शूरा बहिश्चराः (submetric).

11 $^{a}$) $B_4$ पार्श्व (for पार्श्वे). —$^{b}$) Dn एवानुगो (for एव जनो). —$^{c}$) $K_3$ अहिसा (sic); $G_1$ M ससिंहः (for असिंहः). $K_5$ $V_1$ B Da $D_{2.3.5.6.8}$ असिंहः स($D_{2.3.5}$ सिं)हितः सिंहैः; $D_7$ T $G_{2.4}$ सिंहः सिंहेन सहितः. —$^{d}$) $D_7$ S ($G_3$ missing) विंदते (for लभते).

12 $^{b}$) $K_3$ तरः (for रतः). —$^{c}$) $G_1$ हि (for स). —$^{d}$) $D_1$ उपास्थितः; $D_2$ उपसितः.

13 $^{a}$) $K_3$ च ते; $K_5$ $V_1$ B Da Dn $D_{2.3.5.6.8}$ एतन्; $D_4$ भृत्यैर्; $M_2$ एते (for एतैर्). $Ś_1$ $K_4$ $D_1$ मनुष्येंद्रः. —$^{b}$) $K_1$ शूरः. —$^{d}$) $G_2$ $M_2$ transp. कृत्स्नां and जेतुं. B Da Dn $D_{2.3.5.6.8}$ कृत्स्ना ($Dn_2$ कृत्स्नां; $D_2$ कृष्णा) जेतुं वसुंधरा; $D_7$ T $G_{1.4}$ $M_{1.3.4}$ जेतुं कृत्स्ना वसुंधरा.

14 $^{a}$) $K_{4.5}$ $V_1$ Bo.$_{3.4}$ Dn $D_{2.3.5.6.8}$ नाविद्यो; $G_1$ नावैद्ये (for नावैद्यो). $D_6$ नानुजः (for नानृजुः). —$^{b}$) $K_{2.3.5}$ $V_1$ Bo.$_{2-4}$ $Da_2$ Dn $D_{2.3.5-8}$ T $G_{1.2.4}$ $M_{1.3.4}$ नाप्राज्ञो; $D_1$ नाविद्ये; $M_2$ न प्राज्ञो (for नाविद्यो). $B_3$ नामहाबलः; $Dn_2$ नामहाधनाः; $G_1$ नामहायशाः (for °धनः). $Da_1$ नाम प्राज्ञो महाधनाः. —$^{c}$)

C. 12. 4344
B. 12. 119. 14
K. 12. 119. 14

संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥ १४
बाणवद्विसृता यान्ति स्वामिकार्यपरा जनाः ।
ये भृत्याः पार्थिवहितास्तेषां सान्त्वं प्रयोजयेत् ॥ १५
कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशमूलकरो भव ॥ १६
कोष्ठागारं च ते नित्यं स्फीतं धान्यैः सुसंचितम् ।
सदास्तु सत्सु संन्यस्तं धनधान्यपरो भव ॥ १७
नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः ।
वाजिनां च प्रयोगेषु वैशारद्यमिहेष्यते ॥ १८
ज्ञातिबन्धुजनावेक्षी मित्रसंबन्धिसंवृतः ।
पौरकार्यहितान्वेषी भव कौरवनन्दन ॥ १९
एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया ।
श्वा ते निदर्शनं तात किं भूयः श्रोतुमिच्छसि ॥ २०

इति श्रीमहाभारते शान्तिपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

D1 संग्राह्ये; M2 संप्राप्तो (for संग्राह्यो). Da1 वसुधापार्श्वै (for °पालैर्). — d) Ś1 Dn2 D3. 5 भृत्यैर्. K4 D1 भृत्यभृतां (for °वतां). Ś1 Bo. 1 Da D4. 7 T G1. 4 M1. 3 वरः; K3. 4 D1 वरैः (for वर).

15 K3 om. 15ab. — a) K4 बलवद् (for बाण°). D1 हि सृता; T2 विवृता; G1 न सृता (for विसृता). ❀ Cn: विसृता अपरावर्तिनः । ❀ — b) D1 स्वामिकार्या; M3 °काल-. D4 T2 G1 M2 -परायणाः (D4 °णः); G2 -नराः पराः (for -परा जनाः). K3. 5 V1 B Da Dn D2. 3. 5–8 T1 G4 M1. 3. 4 नराः (for जनाः). — c) Ś1 K4 ते; D4 यो (for ये). D1 पार्थिवं. — d) V1 शांत्वं (for सान्त्वं). D7 G4 सदाचरेत्; T1 समाचरेत् (for प्रयोजयेत्). T2 G1. 2 M तेषु सांत्वं समाचरेत्.

16 a) K5 V1 B Da D3. 5 कोषश्च; T2 कोशस्तु. — b) G4 भूमिपैः (for राजभिः). — c) V1 B Da D3. 5 कोषमूला. — d) K3 D4. 7 T G1. 2. 4 M1. 3. 4 कोशवृद्धिकरो. K5 V1 B Da Dn D2. 3. 5. 6. 8 M2 कोषो (K5 Dn D3 कोशो; B1 कोष-; M2 कोश-) वृद्धिकरो भवेत्.

17 K3. 4 D1 om. (hapl.) 17. Ś1 reads 17 on marg. (*sec. m.*). — a) K1 कोष्ठागारे; B3. 5 कोषागारं; G1. 2 गोष्ठागारं (for कोष्ठागारं). Dn2 D2. 3. 5. 6. 8 नित्यं ते (by transp.); M1. 3. 4 सुस्फीतं; M2 संपूर्णं. — b) V1 Bo–4 Dn1 D3. 5. 7 T1 G2. 4 स्फीतैर् (for स्फीतं). K5 D2 चान्यैः (for धान्यैः). K5 V1 Bo. 2. 3 Da Dn D2. 3. 5. 6. 8 सुसंवृतं; B1. 4. 5 सुसंभृतं; D4. 7 T G1. 2. 4 सुसंचितैः (for °तम्). M1. 3. 4 नानाधान्यैः सुसंचितैः; M2 नानाद्रव्यस्तु संचिते (sic). — c) K3 तदस्तु; T2 G1 सदा त्वं (for सदास्तु). B1 सन्त्यः (for सत्सु). Ś1 संतृप्तं; K1 संतप्तं; D6 मन्यंस्तं; M2 सुन्यस्तं (for संन्यस्तं). T1 G2. 4 सदा स्वरस्सु संन्यस्तं. — d) M2 -धरो (for -परो).

18 a) Da तु (for च). D1 ये (for ते). G2 युक्ता (for भृत्या). — b) D3 भवंति (for भवन्तु). D1 -कोविदः; G1 -कोविदां (for -कोविदाः). — c) K4 वाजिनश् (for वाजिनां). K1 om. च. T1 G2. 4 चात्र योगेषु (for च प्रयोगेषु). — d) K5 वैशारदम् (for °रद्यम्). D3 इहोष्यते; T2 इहेष्यसे; G1 इहेष्यति (for इहेष्यते). Da1 वैशारक्षमिहेक्षते (sic).

19 a) K3 V1 Da D4 G1 M1. 3 -जनापेक्षी; T1 G4 -धनापेक्षी (for -जनावेक्षी). — b) K2 -संवृताः; D7 T G1. 2. 4 M2. 4 -सत्कृतः; M1 -संकृताः; M3 -सत्कृताः (for -संवृतः). — c) K1 -हितान्वेशी; Da1 -हितान्वेक्षी; D1 -हितान्वीक्षी; D6 -हितान्वेषा; D7 T G2. 4 M1–3 -हितापेक्षी; G1 -हितापेक्षा; M4 -हितावेक्षी (for -हितान्वेषी). D4 पौरजानपदावेक्षी. — d) B2 भवेः; Da भवेत् (for भव). D2 -नंदनः; D7 S (G3 missing) नित्यदा (for -नन्दन).

20 a) K1 एष; B3 तेषां; T2 एषां (for एषा). Da D5 च (for ते). — b) K4 प्राज्ञा; T1 G4 प्रजा (for प्रज्ञा). K1 चाभिहता; V1 B D2. 3. 6. 8 च विहिता; Dn2 स्वभि*ता; D4 वाभिहिता; D5 ते विहिता; T2 चाभिमता; G1 चारिमता (for चाभिहिता). K5 प्रजा च विहिता मया; Dn1 प्रजास्त्वभिहिता मया. — c) K4 स्वतो; K5 V1 B Dn D2. 3. 5. 8 शुनो; Da शून्यो; D6 सुनो; T2 श्वाने; M2 श्वानो (for श्वा ते). Dn2 निदर्शने. — d) B2 भूयः किं (by transp.). D3 अर्हसि (for इच्छसि).

# १२०

युधिष्ठिर उवाच ।
राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत ।
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥ १
तदेव विस्तरेणोक्तं पूर्वैर्दृष्टं सतां मतम् ।
प्रणयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ २
भीष्म उवाच ।
रक्षणं सर्वभूतानामिति क्षत्रे परं मतम् ।
तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ॥ ३
यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः ।
तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ॥ ४
तैक्ष्ण्यं जिह्मत्वमादान्त्यं सत्यमार्जवमेव च ।
मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति ॥ ५
यस्मिन्नर्थे हितं यत्स्यात्तद्वर्णं रूपमाविशेत् ।
बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥ ६
नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी ।
श्लक्ष्णाक्षरतनुः श्रीमान्भवेच्छास्त्रविशारदः ॥ ७

C. 12. 4357
B. 12. 120. 7
K. 12. 120. 7

---

Colophon: $G_3$ missing. —*Sub-parvan:* Ś$_1$ K $V_1$ $B_{1-4}$ Dn $D_{1-7}$ T $G_{1.2.4}$ M राजधर्म. —*Adhy. name:* Ś$_1$ K $V_1$ B Da $D_{2.3.5.6}$ $M_{1-3}$ श्चर्षिसंवादः; $D_4$ ऋषिसंवादः; $D_7$ $T_1$ $G_{2.4}$ भृत्यसंरक्षणं; $M_{1-3}$ (also) कर्मप्रयोगः. —*Adhy. no.* (figures, words or both): $B_1$ 109; $B_4$ $Dn_1$ 118; $Da_1$ $Dn_2$ 119 (as in text); $D_7$ T $G_{1.2.4}$ M 121; $D_8$ 117. —*Śloka no.:* $Da_1$ $Dn_1$ $D_8$ 20.

## 120

☞ $G_3$ is missing for this adhy. (cf. v. l. 12. 112. 1).

1 $D_8$ om. the ref. —$^a$) Ś$_1$ $K_4$ $D_1$ $T_2$ पूर्वं पूर्वैर्; $K_1$ $D_4$ $M_{1.3.4}$ पूर्वैः पूर्वं. $M_{1.3.4}$ प्रयुक्तानि (for -नियु°). —$^d$) Da राजधर्मान्व($Da_1$ °न्वि)वेक्षिभिः.

2 $^a$) $K_3$ Da $D_4$ तदेवं; $B_2$ तदैव (for तदेव). —$^b$) $K_{2.3}$ $B_3$ Dn $D_{2.3.5.6.8}$ पूर्वदृष्टं; $Da_1$ पूर्वं दृष्टं; $Da_2$ पूर्वौ दृष्टं; $D_1$ पूर्वैर्मृष्टं; $D_7$ T $G_{1.2.4}$ पूर्ववृत्तं (for पूर्वैर्दृष्टं). —$^c$) $K_3$ Da Dn $D_{6.8}$ Cn. v प्रणेयं (for प्रणयं). —$^d$) $D_2$ भरतर्षभः.

3 $D_8$ om. the ref. —$^a$) $Da_1$ सर्वलोकानाम्; $D_1$ °भूतानि (for °भूतानाम्). —$^b$) $K_{3-5}$ $Bo._1$ $Dn_2$ $D_{2.6-8}$ S ($G_3$ missing) क्षात्रं; $V_1$ $B_2$ Da $D_4$ क्षात्रे (for क्षत्रे). —$^c$) Ś$_1$ $K_4$ $D_{1.3}$ यद् (for तद्). $K_3$ कुर्युस् (for कुर्यात्). —$^d$) Ś$_1$ $K_4$ $D_1$ तच्छृणुष्व (for तथा शृणु). $V_1$ महामते; $D_7$ S ($G_3$ missing) नरा($G_1$ जना)धिप ($M_2$ °पः).

4 $^b$) $D_1$ बिभर्ता. $D_2$ विभर्तं भुजगाशन (sic). —$^c$) $G_1$ यथा (for तथा). $M_4$ बहुविधा.

5 $^a$) $K_1$ $B_3$ तैक्ष्णां; $B_4$ $D_{3.5.8}$ तैक्ष्णं; Da $D_4$ तीक्ष्णं (for तैक्ष्ण्यं). $D_5$ नित्यत्वम्; $D_6$ जिह्मत्वम्; $D_7$ $T_1$ $G_{2.4}$ मृदुत्वम् (for जिह्म°). Ś$_1$ $K_{1-4}$ $V_1$ $B_1$ $D_{1.4.5.7}$ T $G_{1.2.4}$ आदानं; $K_5$ आदत्ते; $B_4$ आदात्तं; Da आदातु; Dn $D_8$ आदात्म्यं; $D_2$ आदात्वं; $D_3$ आदात्यं; $D_6$ औदानं; M आदाय (for आदान्त्यं). —$^b$) $G_1$ सत्त्वम् (for सत्यम्). —$^c$) Ś$_1$ माध्यस्थः; $K_1$ $D_1$ म($D_1$ मा)ध्यस्थ-; $K_4$ मध्यस्थ्यं; $B_2$ मध्यमः. Ś$_1$ $K_{1.4}$ $D_1$ सत्त्वे चातिष्ठंस्. —$^d$) $D_4$ तथा स; $D_7$ $T_1$ $G_4$ तथैव (for तथा वै). $K_1$ इच्छति; $K_{3.5}$ $Bo._{3-5}$ Da $D_{4.6.8}$ अर्छति; $V_1$ अर्हति; $B_2$ अर्चति; $D_2$ अर्छिति (for ऋच्छति).

6 $^a$) $D_7$ T G ($G_3$ missing) यथै($D_7$ °दै)व (for हितं यत्). M यस्मिन्नये स्याद्यद्वर्णं ($M_4$ °र्णंस्). —$^b$) $G_1$ तत्राणं; $M_2$ lacuna (for तद्वर्णं). $K_3$ $V_1$ B Da $Dn_1$ $D_{2.3.5-8}$ $T_1$ $G_{1.4}$ M आदिशेत्; $D_1$ आविशत् (for आविशेत्). ❀ Cv: शिरः कदाचिद्ग्रीवां दीर्घीकृत्य प्रकटीकरोति कदाचिद्ध्रस्वं कृत्वा गूहयति । ❀ —$^c$) $D_1$ राजो (for राज्ञो). $G_1$ वै (for हि).

7 $^a$) Ś$_1$ $K_4$ रक्षति; $D_1$ रक्षिति (for रक्षित-). $D_4$ -मंत्रं स्याद्; $D_6$ -मंत्रस्य (for -मन्त्रः स्याद्). —$^b$) $D_1$ सूकः (for मूकः). $K_2$ शरच्छशी; $D_6$ °स्थली (for °च्छिखी). —$^c$) $K_1$ श्रुक्ष्णाक्षर-; $D_1$ श्लाक्ष्णाक्षरे (for श्लक्ष्णाक्षर-). $D_7$ $T_2$ $G_{1.4}$ -पद-; $T_1$ -पदः; $G_2$ -गात्र-; $M_{1.3}$ -वचा; $M_2$ -वचः; $M_4$ -वचाः (for

C. 12. 4338
B. 12. 120. 8
K. 12. 120. 8

आपद्द्वारेषु यत्तः स्याज्जलप्रस्रवणेष्विव ।
शैलवर्षोदकानीव द्विजान्सिद्धान्समाश्रयेत् ॥ ८
अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोपमाम् ।
नित्यमुद्यतदण्डः स्यादाचरेच्चाप्रमादतः ।
लोके चायव्ययौ दृष्ट्वा वृक्षाद्वृक्षमिवाप्लुवन् ॥ ९
मृजावान्स्यात्स्वयूथ्येषु भावानि चरणैः क्षिपेत् ।
जातपक्षः परिस्पन्देद्रक्षेद्वैकल्यमात्मनः ॥ १०
दोषान्विवृणुयाच्छत्रोः परपक्षान्विधूनयेत् ।
काननेष्विव पुष्पाणि बर्हीवार्थान्समाचरेत् ॥ ११
उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् ॥ १२
प्रावृषीवासितग्रीवो मज्जेत निशि निर्जने ।

---

-तनुः). — d) D7 भवेच्चात्र; M1 °च्छात्र- (for °च्छास्त्र-).

8 a) Ś1 K1. 4 D1. 4 G1 M1. 3. 4 आयद्वारेषु; V1 Bo. 5 (marg. as in text) अप°; D7 T1 G2. 4 आयव्ययेषु (for आपद्द्वारेषु). K4. 5 V1 Bo. 1. 3–5 Dn D2. 3. 5–8 T1 G2. 4 युक्तः स्याज्; T2 G1 यत्तस्य (for यत्तः स्याज्). B2 Da आपधारे (B2 अपद्वारे) प्रयुक्तः स्याज्. — b) V1 Da M2 -जलं (for जल-). D4 -प्रश्रवणेषु. K4 [इ]ह (for [इ]व). — c) Ś1 K4 शैलो; D7 S (except G2 M2; G3 missing) शैलाद् (for शैल-). ❀ Cv: शैलं वर्षोदकानीवेत्यत्र वर्षोदकानि शैलमिव ।❀ — d) V1 सर्वान् (for सिद्धान्). K1 द्विजासिद्धसमाश्रये (sic).

9 a) D7 T G1. 2. 4 M आत्मार्थं (T2 G1 °र्नं) हि (for अर्थकामः). V1 B1. 2 Da1 शिखा; Da2 शिषा; D6 शिखी; D7 T G (G3 missing) सदा; D8 शिखं (for शिखां). M4 कुर्याद् (for राजा). ❀ Cn: शिखां योग्यलिङ्गं क्रूरत्वादिकम् ।; Cv: शिखां शौर्याग्निर्ज्वालाम् ।❀ — b) K1 धर्मध्वजोपमान्; K4 V1 B1. 2 Da °पमाः; G1 °पमं; G2 धर्मविदुत्तमं. — c) D1 उद्धतदंडाः. — d) K4 D1 आचरेश्च. K1 D1 [अ]प्रसादतः; T2 [अ]प्रमादतान्; M2 प्रमादवान् (for [अ]प्रमादतः). K3. 5 V1 B Da Dn D2. 3. 5. 6. 8 आचरेदप्रमा(K3 °सा)दतः; D4 corrupt; D7 G1. 2. 4 M1. 3. 4 आचारे चा(G1 °रक्षा-)प्रमादवान् (D7 °दतः); T1 आचारे चाद्रमाद्रवान् (sic). — e) D8 चायव्ययो. D4 पश्यन् (for दृष्ट्वा). — f) K1 [अ]ध्रुवं; B1. 2. 5 M1. 3. 4 प्लुवन्; B4 प्रवन्; Da प्लुवत्; D4 [अ]व्रजन्; D7 T1 G2. 4 व्रजेत्; T2 G1 M2 प्लुवेत् (for [आ]प्लुवन्). K3 वृक्षवृक्षमिवाव्रजेत्; K4 B3 Dn D2. 3. 5. 6. 8 बृहद्वृक्षमिवास्रवत् (K4 °वाप्लुवन्; D2 °व स्रवत्; D5 °वाश्रवत्; D6 °व श्रवत्; D8 °व श्रवन्); K5 बृहक्षमिव जिह्मवत्; Cv बृहद्वृक्ष इवास्रवन्. ❀ Cn: बृहन्तो वृक्षा यत्र तद्बृहद्वृक्षं तालवनम् । आस्रवत् रसं प्रस्रवत् । यथा रसग्राही प्रदेशविशेषे एव प्रहृत्य रसं गृह्णाति न तु कृत्स्नवृक्षच्छेदेन इक्षुकाण्डादिवत् ... एवं प्रजानामायव्ययौ ज्ञात्वा ... ताभ्यो रसमादद्यात् । ❀

10 a) K5 प्रज्ञावान्; D7 S (G3 missing) आ-(T1 अ)ज्ञा° (for मृजा°). D7 स्वस्व- (for° स्यात्स्व-). Ś1 K2. 4 V1 Bo. 2 D5. 8 स्वयूथेषु; B1 corrupt (for °थ्येषु). — b) Ś1 (*inf. lin.* as in text) K2–5 V1 B Da Dn D2–8 S (G3 missing) भौमानि; D1 भमानि (sic) (for भावानि). D7 S (G3 missing) किरन् (for क्षिपेत्). ❀ Cn: भौमानि परेषां सस्यानि चरणैः रश्वादिगमनैः क्षिपेन्नाशयेत् । ❀ — D4 om. (hapl.) 10c–11b. — c) G1 ज्ञातिपक्षं (for जातपक्षः). K1 परिसंदेद्; D1 °स्पर्देद्; D3 °स्वंदेद्; T1 G2. 4 °स्पंदो (for °स्पन्देद्). — d) K3. 5 Dn D2 T2 M2 Cn प्रेक्षेद् (for रक्षेद्). K4 D2. 6. 8 वैकल्पम्; D1 corrupt.

11 D4 om. 11ab (cf. v. l. 10). — a) K5 शत्रुया (for शत्रोः). — b) K3 D1 परपक्षं (for °पक्षान्). D1 निधूनयत्; D7 T G1. 2. 4 च सूदयेत्; M विसूदयेत् (for विधून°). — c) D6 कारणेषु (for काननेषु). G1 [इ]ह (for [इ]व). — d) K1 बर्हीवार्थं; K2 बहिर्वार्थान्; K3 B3 Da Dn2 बहिरर्थात्; K4 बही-वार्थान्; K5 V1 Bo–2. 4. 5 Dn1 D2. 6. 8 T1 G2. 4 बहिर-(K5 °रा)र्थान्; D4 बहीवीर्थान् (sic); D7 T2 G1 बहिश्चार्थान्; M1. 3. 4 बर्ही चा(M4 °र्हीव)र्थान्; M2 बलीवार्थान् (for बर्हीवार्थान्). B4 Dn1 D8 समाचरन्; M1. 3. 4 °येत् (for °रेत्). Cv बहूनर्थान्समाचरेत्.

12 a) K1 उश्रितान्. K5 V1 B D (except D4) T1 G1. 2. 4 M2 नाशयेत् (for आश्र°). T2 उच्छ्रितान्याश्रयेत्स्फीतान्. — b) Ś1 K4 नगेंद्रान् (for नरेन्द्रान्). D8 नचलोपमान्. — D4 om. 12cd. — c) Ś1 शयेच् (for श्रयेच्). V1 B2 इवाज्ञातां; B1 M1. 3. 4 इवाज्ञातं; D7 T G2. 4 इव ज्ञातिं; G1 M2 इव ज्ञातं (for अविज्ञातां). K1 च्छ्राय्येशायामविज्ञातं (sic). — d) D6 गुप्त-. D2. 3. 6. 8 कारणम् (for शरणम्). Dn गुप्तं रणमुपाश्रयेत्.

13 a) Bo प्रावृषां. B1 उषित- (for असित-). K1 -ग्रीबां. — b) K1 सज्जितो; K4 सज्जते; D1

मायूरेण गुणेनैव स्त्रीभिश्चालक्षितश्चरेत् ।
न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ॥ १३
चारभूमिष्वभिगमान्पाशांश्च परिवर्जयेत् ।
पीडयेच्चापि तां भूमिं प्रणश्येद्गहने पुनः ॥ १४
हन्यात्क्रुद्धानतिविषान्ये जिह्मगतयोऽहितान् ।
नाश्रयेद्बालबर्हाणि सन्निवासानि वासयेत् ॥ १५
सदा बर्हिनिभः कामं प्रसक्तिकृतमाचरेत् ।
सर्वतश्चाददेत्प्रज्ञां पतंगान्गहनेष्विव ।
एवं मयूरवद्राजा स्वराष्ट्रं परिपालयेत् ॥ १६
आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ।
आत्मसंयमनं बुद्ध्या परबुद्ध्यावतारणम् ।
बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् ॥ १७

C. 12. 4269
B. 12. 120.18
K. 12. 120.

सज्जेत; D1. 7 T G4 माद्येत (for मज्जेत). D6 तर्जने (for निर्जने). — c) D4 मयूरेण. K1. 3 V1 B Da D2–5. 8 T2 M1. 3. 4 गुणेनैवं. — d) K3. 5 V1 Bo. 3–5 Dn D2. 3. 5. 6. 8 T2 चावेक्षितश्च; B1. 2 Da चारक्षितश्च; D4 चालक्षितं; D7 T1 G1. 2. 4 M1. 3. 4 आरक्षितश्च; M2 आरक्षिते; Cv चालक्षितश्च (as in text). — e) K1 जह्याश्च; K4 जह्यश्च (for जह्याच्च). D6 तमुत्राणं (for तनु°). — f) T2 रक्षेत (for रक्षेद्).

14 Dn2 om. 14ab. — a) D6 चोर- (for चार-). K3. 5 V1 Bo–4 Da Dn1 D5. 8 [अ]भिगतान्; K4 °गमात्; B5 D2. 3. 6 [अ]नुगतान्; D4 [अ]भिमतान्; D7 S (G3 missing) [अ]वततान् (for [अ]भिगमान्). — b) D1 पाशाच्च (for पाशांश्च). — c) K1. 4 D1 पीडयेश्चापि; K5 Dn D2. 8 प्रणयेद्वापि; V1 D6 प्रणीयेच्चा( D6 °च्छा )पि; Bo. 3–5 D3 प्रणीयेद्वापि; B1. 2 प्रणीयेतापि; Da प्रालीयेतापि; D5 प्रीणयेद्वापि; D7 S (G3 missing) प्रक्रीडे( M1. 3 °डा )च्चापि; Cv प्रस्थापयेद्वा (for पीडयेच्चापि). — d) D6 M1. 3. 4 प्रणश्यद्; M2 °मन्. V1 Bo. 1. 3. 4 Dn1 D3. 5. 7 S (G3 missing) ग्रहणे (for गहने). — After 14, D7 S (except G1; G3 missing) ins.:

278* एवं मयूरधर्मेण वर्तयन्सततं नरः ।

15 a) Ś1 हन्येत्; G1 हन्यत्; G2 अन्यात् (for हन्यात्). D7 T1 G2. 4 अभिषहन्; T2 G1 अतिद्वेषान् (T2 °द्) (for °विषान्). — b) K4 V1 Bo. 4. 5 Da D2. 3. 5. 6. 8 G2 अजिह्म-; B3 Dn2 ताञ्जिह्म- (for ये जिह्म-). K3 B1. 3. 5 (marg.) D7 M1. 3. 4 [ऽ]हिताः; T2 G1 जनाः (for ऽहितान्). — c) B (except B1) Dn2 D6. 8 G2 Cn. v नाशयेद्; Da लोम° (for नाश्रयेद्). Ś1 K V1 B Dn D1. 3. 5. 6. 8 बलबर्हाणि; Da वन°; D4 Cv पर°; D7 T G1. 2. 4 चावगर्ह्याणि; M3 बालबार्हाणि (for °बर्हाणि). ❀ Cn: बलबर्हाणि स्थूलान्पक्षान् सैन्यस्य पक्षस्थानीयान्महाशिबिरवारवनितानटनर्तकादीन् ।; Cv: परबर्हाणि वैरिणां बर्हस्थानीयान्यङ्गरक्षकबलानि । ❀

— d) Ś1 K V1 B (except B1. 2) Da Dn D1–3. 5–7 S (except M2; G3 missing) सन्निवासान्नि( Ś1 K4 D1 °स्यान्नि-; K5 Da °सान्वि-; T2 °सं नि )वास( K3. 5 °श्र )येत्; D4 सन्निवासात्तियासयेत् (sic).

16 K5 om. (hapl.) 16. — a) K4 बर्हिनिभा; D7 T1 G4 M4 °समं; T2 M1–3 °समः; G1 बर्हिःसमं; G2 बर्हिसतं (for °निभः). M1. 3 कामः. — b) K1. 4 D1 प्रसक्तो (sic); K2 Dn1 प्रशस्तं; K3 V1 B2–5 Da D2–7 T G (G3 missing) M1. 2 प्रसक्तं; Bo Dn2 D8 प्रशक्तं; M3. 4 प्रसक्त- (for प्रसक्ति-). B1 -कृत्यम् (for -कृतम्). — c) Ś1 K1. 4 D1 M2 चाचरेत्; D4 चाददेत्; D6 चाददीत्; D7 T1 G2. 4 °दत्; T2 G1 M4 °दे (for °देत्). K3 प्राज्ञः; D1 प्रज्ञा. — d) K2 V1 B Da Dn D2. 3. 5. 8 पतंगं; D4 पन्नगं; D6 पतंगा (for पतंगान्). K3 गहने श्रितः; Da गहने यथा; Dn2 °नेष्वपि (for °ष्विव). K4 पतंगानाहतेष्विव. — e) K4 राज्ञाः. — f) V1 Bo. 3–5 Dn D2. 3. 5. 6. 8 स्वराज्यं; D4 स्वं राष्ट्र- (for स्वराष्ट्रं). V1 Bo. 1. 3–5 प्रतिपालयेत्; D4 -परिपालनं (for °पालयेत्).

17 a) K3 Bo. 2. 5 D2. 6 T2 G2 M2 आत्मबुद्धि-; K4 D1. 8 आत्मवृद्धिं; D4 °वृत्ति- (for °वृद्धि-). K3 -करं; D1. 6 M4 -करी; D2 -करां (for -करीं). K3 D4 नीत्या (for नीतिं). — c) B1 अर्थं- (for आत्म-). — d) T2 परमिथ्या- (for °बुद्ध्या). K3 V1 Bo. 3. 4 D8 च धा( K3 ता )रणं; K5 B1. 2. 5 Da Dn D2. 3. 5. 6 [अ]वधारणं; D7 S (G3 missing) विचारणा (T2 G1. 2 M1. 3. 4 °णं; M2 °णां) (for [अ]वतारणम्). — Dn2 om. 17ef. — e) Da1 M1. 3. 4 चार्थगुण-; Da2 चार्थगुणं; D6 वात्मगुण-; D7 G2 चाति° (for चात्म°). T2 G1 बुद्ध्यार्थगुणसंप्राप्तिर्; M2 अबुद्ध्या च गुणप्राप्तिर्. — f) D4 -निदर्शने.

18 a) K4 D4. 7 S (G3 missing) विश्वासयेत् (for चाश्वा°). K1 स्वानां; K3 प्राज्ञः; D4 प्राज्ञा (for साज्ञा). — b) G1 स्वशक्तिर्. Da1 वा; Da2 D7

C. 12. 4370
B. 12. 120. 19
K. 12. 120. 19

परं चाश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ।
सान्त्वयोगमतिः प्राज्ञः कार्याकार्यविचारकः ॥ १८
निगूढबुद्धिर्धीरः स्याद्वक्तव्ये वक्ष्यते तथा ।
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः ।
स्वभावमेष्यते तप्तं कृष्णायसमिवोदके ॥ १९
अनुयुञ्जीत कृत्यानि सर्वाण्येव महीपतिः ।
आगमैरुपदिष्टानि स्वस्य चैव परस्य च ॥ २०
क्षुद्रं क्रूरं तथा प्राज्ञं शूरं चार्थविशारदम् ।
स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः ॥ २१
अप्यदृष्ट्वा नियुक्तानि अनुरूपेषु कर्मसु ।
सर्वांस्ताननुवर्तेत स्वरांस्तन्त्रीरिवायता ॥ २२
धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।
ममायमिति राजा यः स पर्वत इवाचलः ॥ २३
व्यवसायं समाधाय सूर्यो रश्मिमिवायताम् ।
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥ २४

---

T1 G4 न (for च). —V1 reads 18^cd on marg. —^c) Da आत्मानं. Ś1 K1. 2. 4. 5 V1 B Da Dn1 D1. 2. 6. 8 परिमर्षेण; D4 G2 M2 परमर्शेन (for परि°). ❀ Cn: बुद्धिपरिमर्शेन सर्वतोऽतीतानागतविचारणेन बुद्धिं कार्यनिश्चयं बुद्ध्या ऊहापोहकौशलरूपया मेधया विचारयेत् साधकबाधकभूमौ संचारयेत् । ❀ —^d) K4 बुध्यं बुद्ध्या; Da1 बुद्ध्या बुद्धिं (by transp.). —^e) V1 B1. 2 शांत्व- (B1 °त)योग-; B4 सांत्वमंत्र-; Da सांत्वयोग्य-. D1 प्राज्ञाः; D5 प्रज्ञः; D6 प्रज्ञ. K4 Dn2 G1 सांत्वयोगमतिप्राज्ञः. —^f) K1 कार्यकार्य-; Dn1 कार्याकार्या-; D4 कार्यैकार्य-. K3. 5 V1 B Da Dn D2–6. 8 T2 G1 M -प्रयोजकः (for -विचारकः).

19 ^a) K1 वीरः स्याद्; K3 धीरस्य (for धीरः स्याद्). K2. 5 V1 B Da Dn1 D2. 3. 5–8 S (G3 missing) निगूढबुद्धेर्धीरस्य. —^b) D1. 7 G1 Cv वक्तव्यो. K3 वक्षते; K5 D2 वा कृते; B0. 3–5 D3. 5 वाक्कृते; Da वाक्छले; Dn D8 वा कृतं; D6 चाकृते (for वक्ष्यते). —^c) K2–5 Cn स निकृष्टां; Dn2 सोनिकृष्टां; D6 सन्निविष्टां (for संनिकृष्टां). D1 कथं; D8 lacuna; G2. 4 तथा (for कथां). K3 D4 प्राप्य- (for प्राज्ञो). —^e) D4 स्वं भावम् (for स्वभावम्). Ś1 तप्तुं; D4 तत्त्वे (for तप्तं). —^f) K2 कालायसम्; G1 कार्ष्णा°; M4 कृष्णो° (for कृष्णा°).

20 ^a) K1 अनुयुज्येत; T2 अभियुंजीत (for अनुयुञ्जीत). D7 S (G3 missing) सत्यानि (for कृत्यानि). —^b) K1 सर्वान्येव; G2 पर्वाण्येव (for सर्वा°). Da1 महीपते (for °पतिः). —^c) M1 उपविष्टानि (for °दिष्टानि).

21 ^a) K3. 5 V1 B Da D2. 6–8 T G1. 2. 4 M1. 3. 4 मृदुं क्रूरं; Dn M2 मृदुशीलं; D4. 5 मृदुक्रूरं (for क्षुद्रं क्रूरं). Da2 D4 तथा प्राज्ञ; Dn1 यथा प्राज्ञं. —^b) B0 चापि; D4 वार्थ- (for चार्थ-). K1 -विचारवत्; K3. 5 V1 B Da Dn D2–7 S (G3 missing) -विधानवित्; D8 -विघातवित् (for -विशारदम्). —^c) B1 वियुंजीत (for नियुञ्जीत). —^d) K4. 5 B1–4. 5 (marg.) Da Dn D2. 3. 5. 6. 8 च बलाधिकाः; B0 निरुपद्रवाः; B5 निरपत्रपाः (for वचनाधिकाः).

22 ^a) Ś1 K4 G1 अप्यदृष्टा; K2. 3. 5 Dn1 D4 अथ दृष्ट्वा; Da अथ तृष्णा; Dn2 अथ दिष्ट्या; D1 अप्यदृष्टां; D2. 3 अर्थदृष्टा; D5 अथ हस्ता; D6 अर्थदृष्ट्वा; D8 अथ दृष्टा; T2 अप्रदृष्टा (for अप्यदृष्ट्वा). K1 नियोगानि; Da नियुंक्तानि (for नियुक्तानि). D7 T1 G2. 4 अप्य(G2 °पि)दृष्टान्यनेकानि; M अवि(M3. 4 °पि)युक्तान्वि- (M2 °नि)युक्तान्हि; Cv अथ दृष्टानि युक्तानि. —^b) Ś1 K2 D1 ह्यनुरूपेषु; K3–5 V1 B Da Dn D2. 3. 5. 7 T G2. 4 M2 स्वानुरूपेषु; D4. 8 स्वानि रूपेषु; G1 M1. 3 स्वनुरू°; M4 स्वर° (for अनु°). —^c) M2 सर्वासांश्च. V1 reads from ननु up to मध्ये व (in 25^c) on marg. K1. 3 D4 M चानु-; G1 आनु- (for अनु-). —^d) K1 स्वरस्; K3 T G2. 4 स्वरास् (for स्वरांस्). Ś1 K1 D1 तंत्रीम्; G1 तंत्रिर्. Ś1 K1 D1 [आ]यताः; B1 [आ]यतान् (for °ता). Da स्वरांस्तंत्री (Da1 °स्त्रीत्री) विभीयता.

23 V1 reads 23 on marg. —^a) M1. 3. 4 अनुरोधेन (for अवि°). —^c) G2 राजानः (for राजा यः). —^d) D2. 3 पर्वतम्. M2 उदाचलः.

24 V1 reads 24 on marg. —^a) D7 G1. 2. 4 M1. 3 व्यवहारं; M2 व्यवहारा; M4 °हारान् (for °सायं). V1 D7 T1 G2. 4 समादाय; Da समाधीय (for समाधाय). —^b) K2. 3. 5 V1 B Da Dn D2. 3. 5. 6. 8 T2 G1. 2 M2. 4 रश्मीन्; T1 G4 रश्मिर् (for रश्मिम्). K2 D7 T1 G4 M1. 3 [आ]यतं; K5 V1 B Da

कुलप्रकृतिदेशानां धर्मज्ञान्मृदुभाषिणः ।
मध्ये वयसि निर्दोषान्हिते युक्ताञ्जितेन्द्रियान् ॥ २५
अलुब्धाञ्शिक्षितान्दान्तान्धर्मेषु परिनिष्ठितान् ।
स्थापयेत्सर्वकार्येषु राजा धर्मार्थरक्षिणः ॥ २६
एतेनैव प्रकारेण कृत्यानामागतिं गतिम् ।
युक्तः समनुतिष्ठेत तुष्टश्चारैरुपस्कृतः ॥ २७
अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुधैव वसुंधरा ॥ २८
व्यक्तश्चानुग्रहो यस्य यथार्थश्चापि निग्रहः ।
गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्मवित् ॥ २९
नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवोत्पतन् ।
चारांश्च नचरान्विद्यात्तथा बुद्ध्या न संज्वरेत् ॥ ३०
कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।
अहन्यहनि संदुह्यान्महीं गामिव बुद्धिमान् ॥ ३१
यथा क्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत संचयम् ॥ ३२

C. 12. 4385
B. 12. 120. 34
K. 12. 120. 34

---

Dn D1–3. 5. 6. 8 M2. 4 °तान्; T2 G1 [आ]ततं; G2 [आ]युतं (for [आ]यताम्). — c) M1. 3 हि (for [अ]भि-). D4 -रक्ष्येत. — d) K4 Bo. 4. 5 तुल्यं; M2 कार्ये (for तुल्ये). Bo. 3–5 प्रियाप्रियं (for °प्रिये).

25 V1 reads up to मध्ये व on marg. — a) B1 कुलानां प्रति-; D5 कुलप्रवृत्ति-; G1 मूलप्रकृति- (for कुलप्रकृति-). — b) T2 धर्मज्ञा. — c) K5 D2. 6. 8 निवृत्तान्; V1 Bo. 3–5 D3. 5 निर्वृत्तान् (for निर्दोषान्). — d) T2 G1 M हितान्. K3 यतेंद्रियान्; B1. 2 Da D7 T G1. 4 M जितक्लमान्; Dn अविक्लवा(Dn2 °मा)न्; D1 जितेंद्रियं (for जितेन्द्रियान्). G2 नीतान्यत्ताञ्जितक्लमान्.

26 a) D6 शिष्यितान् (for शिक्षितान्). Da2 D1 om. दान्तान्. — b) K1 नंदेषु (for धर्मेषु). K3. 4 परिनिश्रि(K4 °ष्ट)तान्. — d) D7 S (G3 missing) सर्वार्थ- (for धर्मार्थ-). K4 D1. 7 T G1. 2. 4 -दक्षिणः (for -र°). B1 राजधर्म निरक्षिणः; D8 राजधर्मार्थरक्षितः.

27 V1 reads $27^{a}$–$28^{b}$ on marg. D1 repeats $27^{ab}$ after $28^{ab}$. — a) K5 V1 Bo. 2–5 Dn D2. 3. 5. 6. 8 एतेन च; B1 एवमेव (for एतेनैव). — b) B1 Da1 D2. 3 G1 अगतिं. — c) D7 T1 G2. 4 युक्त्या (for युक्तः). Da समर्थस् (for समनु-). D6 -तिष्ठेते; M2 -तिष्ठेद्धि (for -तिष्ठेत). G1 युक्तस्वमनुतिष्ठेत. — d) Da तुष्टचारैर्; D4 दुष्टचारैर्; G1 तुष्टैश्चारैर् (for तुष्टश्चारैर्). D7 S (G3 missing) पुरस्कृतः (M3 °ताः) (for उपस्कृतः).

28 =(var.) 5. 38. 23. V1 reads $28^{ab}$ on marg. — a) D4 -हर्षश्च; G1 -हर्षः स्यात् (for -हर्षस्य). — K1 om. (hapl.) $28^{b}$–$29^{a}$. — b) G1 lacuna for यं कृ. K4 स्वयं कृत्यानुवेक्षिणः; B1 °र्थवेक्षिणः; B4 D4 °न्ववेक्षणः; Dn °न्ववेक्षितुः; D7 S (G3 missing) °नुदर्शि(G1 °र्शि)नः. — After $28^{ab}$, D1 repeats $27^{ab}$. — c) K3 आत्मा- (for आत्म-). V1 B Da D2. 5. 6 -कोषस्य; G1 -कोशः स्याद् (for -कोशस्य). — d) K3. 5 V1 Bo–2 Da D1. 4. 6. 8 वसुदैव; K4 वसुद्धैव; Dn D2 वसुदेव; D7 S (G3 missing) वसुधेयं (for वसुधैव).

29 K1 om. $29^{a}$ (cf. v. l. 28). — a) D6 व्यक्ताश् (for व्यक्तश्). — b) Da यथाप्तश्; D7 T G1. 2. 4 M2. 4 यथोक्तश् (for यथार्थश्). D1 विग्रहः (for निग्रहः). M1. 3 यथोक्तश्च विनिग्रहः. — c) Ś1 K4 गुप्तराष्ट्रस्य; K1 °धर्मश्च (for °राष्ट्रश्च). — d) Da राजसत्तमः (for °धर्मवित्).

30 a) D1 अवैक्षेत; G1 अवेक्ष्येत; G2 अपेक्षेत (for अवे°). — b) K5 V1 B Da Dn D2. 3. 5. 6. 8 इवोदितः; D7 T G2. 4 इवातपन्; G1 इवातपत्; M1. 3. 4 तपन्निव; M2 तपानिव (for इवोत्पतन्). — c) K1. 5 B2. 3. 5 Dn D2. 3. 5–8 T1 G4 चरान् (K1 B2 D7 T1 G4 °रांश्); K2–4 चराश्; Da चारैश्; D1 चराच्; D4 G1 चाराश् (for °रांश्). K5 V1 Bo. 3–5 Dn D2. 3. 5. 6. 8 स्व(K5 स्वा)नुचरान्; B1. 2 Da D4. 7 T G1. 2. 4 चानुचरान् (for च नचरान्). K1. 3 D4. 7 S (G3 missing) विद्युस्; D6 विंद्यात् (for विद्यात्). K5 Dn D7 S (G3 missing) स्वयं चरेत्; V1 B Da D8 [अ]नुसंचरेत्; D2. 3 [अ]नुसंज्वरेत् (for न सं°).

31 a) K3 काले; K5 V1 Bo. 3–5 Dn D2. 3. 5. 6. 8 कालं (for काल-). D1 कालप्राप्तनुवादयान् (sic). — b) Ś1 K2. 4 B1. 2 Da2 D1 प्रसादयेत्; K1 V1 T2 G2 प्रसू(K1 °सी)दयेत्; B4 प्रपूजयेत्; D5 प्रसंचरेत् (for प्रसूचयेत्). — c) D1 संगुह्यान्. Da2 अहमहनि संदुग्धान् (sic).

32 a) D1 अथ (for यथा). — d) G1 राज्ञा (for राजा). Dn1 संचयान्; D1 °येत्.

C. 12. 4386
B. 12. 120. 35
K. 12. 120. 35

यद्धि गुप्तावशिष्टं स्यात्तद्धितं धर्मकामयोः ।
संचयानुविसर्गी स्याद्राजा शास्त्रविदात्मवान् ॥ ३३
नाल्पमर्थं परिभवेन्नावमन्येत शात्रवान् ।
बुद्ध्यावबुध्येदात्मानं न चाबुद्धिषु विश्वसेत् ॥ ३४
धृतिर्दाक्ष्यं संयमो बुद्धिरग्र्या
धैर्यं शौर्यं देशकालोऽप्रमादः ।
स्वल्पस्य वा महतो वापि वृद्धौ
धनस्यैतान्यष्ट समिन्धनानि ॥ ३५
अग्निस्तोको वर्धते ह्याज्यसिक्तो
बीजं चैकं बहुसाहस्रमेति ।
क्षयोदयौ विपुलौ संनिशाम्य
तस्मादल्पं नावमन्येत विद्वान् ॥ ३६
बालोऽबालः स्थविरो वा रिपुर्यः
सदा प्रमत्तं पुरुषं निहन्यात् ।
कालेनान्यस्तस्य मूलं हरेत
कालज्ञाता पार्थिवानां वरिष्ठः ॥ ३७

---

33 [a]) $B_3$ यद्वि-; $G_2$ बुद्धिर् (for यद्धि). $Dn_2$ भुक्तावशिष्टं; $D_1$ $G_1$ $M_{1.3}$ गुप्ताविं°; $D_4$ गुह्याव°; $M_4$ गुप्त्या वि°. $V_1$ $B_2$ $Da$ यद्गुप्तादवशिष्टं स्याद्; $B_1$ यज्ञसाधनशिष्टं स्यात्. — [b]) $K_{1-3.5}$ $B_{1.2}$ $Da_1$ $Dn$ $D_4$ तद्वित्तं; $V_1$ $Bo.3.4$ $D_{3.5.6.8}$ वित्तं तद्; $D_2$ वित्तं ते (for तद्धितं). $Dn_2$ धर्मकामवित्; $D_4$ कर्मकामयोः (for धर्म°). — [c]) $K_{2.3.5}$ $Bo.5$ $Da$ $Dn$ $D_{4.6}$ $T_2$ संचयान्न (for संचयानु-). $K_4$ -विसर्गः स्याद्; $Da_1$ विसर्गाश्च (for °र्गी स्याद्). $D_7$ $T_1$ $G_{1.4}$ संचयादपि सर्गस्य ($T_1$ $G_4$ °र्गी स्याद्); $G_2$ $M$ संचयादविसर्गः स्याद्. — [d]) $D_1$ राज- (for राजा). $Da$ आप्तवान् (for आत्मवान्).

34 [a]) $K_1$ नाल्पमर्थे; $K_5$ $B$ $Da_1$ $Dn$ $D_{2.3.5.6.8}$ $G_2$ $M_2$ नार्थमल्पं; $V_1$ न चात्मानं; $Da_2$ नात्यर्थमलं (hypermetric); $D_1$ शल्यमर्थं (for नाल्प°). — [b]) $Ś_1$ $K_4$ शास्त्रवान्; $K_3$ $D_4$ शात्रवं (for शात्रवान्). — [c]) $K_{3.4}$ $Bo.2.3.5$ $Da$ $Dn_1$ $D_{6.8}$ तु बुध्येद् ($B_2$ $D_{6.8}$ °त); $K_5$ $V_1$ $B_4$ $D_{2.3.5}$ [अ]नुबुध्येद् ($B_{3.5}$ °त); $B_1$ प्रबुद्ध्वा; $D_7$ $T_1$ $G_{2.4}$ $M$ [अ]नुबुद्ध्वा ($T_1$ $G_4$ °बुध्येच्); $G_1$ [अ]नुबुध्याद् (for [अ]वबुध्येद्). $B_1$ $D_7$ $T_1$ $G_{2.4}$ $M$ चात्मानं (for आ°). — [d]) $Da_1$ चाबुध्ये तु; $Da_2$ $D_7$ $T$ $G_{1.2.4}$ $M$ चाबुद्धेषु; $D_4$ च बुद्धिषु (for चाबुद्धिषु). $M_4$ चाश्वसेत्. $B_1$ न चावृद्धेष्वविश्वसेत्.

35 [a]) $D_2$ दाक्षां (for दाक्ष्यं). $K_{3.5}$ $V_1$ $B$ $Da$ $Dn$ $D_{2-6}$ $G_2$ $M_2$ बुद्धिरात्मा; $D_7$ $T_1$ $G_{1.4}$ $M_{1.3.4}$ भूतिरात्मा (for बुद्धिरग्र्या). — [b]) $M_4$ वीर्यं (for धैर्यं). $D_1$ om. शौर्यं. $K_5$ $V_1$ $B$ $Da$ $D_{2.3.5.8}$ शौर्यं धैर्यं (by transp.); $D_6$ शौर्यं तेजो. $K_{2.4}$ $B_1$ $D_{2.4}$ देशकालप्रमादः; $K_3$ $B_3$ $Dn$ $D_{5.8}$ $T_1$ $G_{2.4}$ $M_{1.3.4}$ °कालाप्रमादः ($T_1$ $G_{2.4}$ °दाः); $K_5$ °कालौ प्रमादः; $B_3$ °कालोप्रमादतः; $D_1$ °कालोप्रसादः. — [c]) $K_{2.3.5}$ $V_1$ $B$ $Dn$ $D_{2.3.5-8}$ $S$ ($G_3$ missing) अल्पस्य. $Dn$ बहुनो (for महतो). $K_1$ $M_2$ वा विवृद्धे ($M_2$ °द्धो); $K_{2.3}$ $V_1$ $B_{1-3}$ $Dn$ $D_{1.7}$ $T$ $G_{2.4}$ $M_{1.3.4}$ वा विवृद्धौ; $D_4$ वापि बद्धौ (for वापि वृद्धौ). $Da$ अल्पस्य वा महातेषा विवृध्यै (sic). — [d]) $Da_1$ धनस्यैवानष्ट-; $D_2$ °स्यैतान्यस्त-; $D_4$ °स्यैतान्यष्टे (for °स्यैतान्यष्ट). $B_5$ (marg.) सवर्धनानि (for समिन्ध°).

36 [a]) $Ś_1$ $K_{1.4}$ अग्निः स्तोकं; $K_5$ $V_1$ $B_{3.4}$ $Da$ $D_{1-3.5.6.8}$ अग्निस्तोकं; $Bo.5$ m अंतस्तोपं; $B_1$ अग्निस्तोयो (for °स्तोको). $V_1$ $Bo.1.5$ $D_{1.6}$ ह्याज्यसिक्तं ($B_1$ °शिष्टं); $Da$ प्राज्यसि($Da_1$ °शि)क्तं; $Dn_1$ [ऽ]थाज्यसिक्तो (for ह्याज्य°). — [b]) $B_1$ वातेरितं; $D_4$ बीजे चैकं; $M$ वाहश्चैको (for बीजं चैकं). $K_{3.5}$ $V_1$ $B$ $Da$ $Dn$ $D_{2-6.8}$ $M$ रो($K_3$ $D_4$ $M$ वा)हसहस्रम् (for बाहु°). — [c]) $K_5$ $Bo.3-5$ $Dn$ $D_{2.3.5.6.8}$ आयव्ययौ; $B_{1.2}$ $M_2$ क्षयोदयं ($M_2$ °यो) (for °दयौ). $V_1$ $D_1$ विपुलः; $Da$ विपुलं. $B_{1.2}$ $Da$ $D_4$ संनिशम्य; $D_7$ $T$ $G_{1.2.4}$ $M_{1-3}$ °यम्य (for °शाम्य). — [d]) $D_{2.6}$ तस्मादन्यं. $D_6$ च (for न). $K_{2.3.5}$ $V_1$ $B$ $D$ (except $D_1$) $S$ ($G_3$ missing) वित्तं (for विद्वान्).

37 [a]) $Ś_1$ $Dn_1$ $D_7$ $T_1$ $G_{2.4}$ $M$ बालोबलः; $K_2$ बालोप्यबालः; $K_3$ बालौ बालः; $K_4$ बलोबलः; $D_1$ बालोबला; $T_2$ बालो वा (for बालोऽबालः). $D_1$ याः (for यः). $K_5$ $V_1$ $Bo-4$ $Da$ $Dn_2$ $D_{2.3.5.6.8}$ बालोप्यबालः ($Bo.1.4$ $Da$ °लं; $D_{2.6.8}$ °ल-) स्थवि($D_2$ °वी)रो रिपुर्यः; $B_5$ बालोप्यबालं स्थविरोपि धूर्यं; $D_4$ बालस्थविरा वा रिपुर्वार्यः. — [b]) $Da_1$ प्रमत्त-; $Da_2$ प्रमत्तः. $G_2$ न हन्यात् (for निह°). — $Ś_1$ $K_{1.2.4}$ $D_1$ om. (hapl.) $37^c$–$38^b$. — [c]) $B$ $Da$ $D_{2.3.5.6.8}$ $T_1$ $M_{1.3.4}$ कालो न (for कालेन). $D_8$ वित्तं (for मूलं). — [d]) $Da$ काले ज्ञाता; $D_7$ $S$ ($G_3$ missing) कालज्ञानं (for कालज्ञाता). $D_7$ $S$ ($G_3$ missing) वरिष्ठं.

हरेत्कीर्तिं धर्ममस्योपरुन्ध्या-
दर्थे दीर्घं वीर्यमस्योपहन्यात् ।
रिपुर्द्वेष्टा दुर्बलो वा बली वा
तस्माच्छत्रौ नैव हेडेद्यतात्मा ॥ ३८

क्षयं शत्रोः संचयं पालनं चा-
प्युभौ चार्थौ सहितौ धर्मकामौ ।
अतश्चान्यन्मतिमान्संदधीत
तस्माद्राजा बुद्धिमन्तं श्रयेत ॥ ३९

बुद्धिर्दीप्ता बलवन्तं हिनस्ति
बलं बुद्ध्या वर्धते पाल्यमानम् ।
शत्रुर्बुद्ध्या सीदते वर्धमानो
बुद्धेः पश्चात्कर्म यत्तत्प्रशस्तम् ॥ ४०

सर्वान्कामान्कामयानो हि धीरः
सत्त्वेनाल्पेनाप्नुते हीनदेहः ।
यथात्मानं प्रार्थयतेऽर्थमानैः
श्रेयःपात्रं पूरयते ह्यनल्पम् ॥ ४१

तस्माद्राजा प्रगृहीतः परेषु
मूलं लक्ष्म्याः सर्वतोऽभ्याददीत ।

C. 12. 4395
B. 12. 120. 44
K. 12. 120. 44

---

38 Ś1 K1.2.4 D1 om. $38^{ab}$ (cf. v. l. 37). — a) D6 हरेत (for हरेत्). M1.3 धनं कीर्तिम् (for कीर्तिं धर्मम्). D8 [उ]पसंध्याद्; M2 [अ]परुंध्याद् (for [उ]परुन्ध्याद्). B1 हरेत्काले तस्य शत्त्योपरुंध्याद्. — b) D2 अर्थे. V1 B1.2 Da D2.3.6.7 S (G3 missing) विघ्नं (for दीर्घं). D4 अर्थं तविनिघ्नं प्रियम् (corrupt) (for अर्थे दीर्घं वीर्यम्). — c) K2.3 Dn2 M2 रिपु-; Da विप्र-; T2 रिपुं. D8 दुष्टो (for द्वेष्टा). K4 बलो; D8 नलो (for बली). — d) All MSS. (except Ś1 K1 D1.4 T1; G3 missing) शत्रोर् (for शत्रौ). K1 नैव हेत्वेद्; K3-5 V1 B Da Dn D3.5 नैव हीये(K3 °ड्ये)द्; D4 नावमन्येद्; D7 T1 G4 नैव भिभ्येद् (sic); T2 G1.2 M2 नैव बिभ्येद्; M1.3.4 नैव पीड्येद् (for नैव हेडेद्). T2 यथात्मा; G2 यदात्मा.

39 a) K1 क्षयः. K3 संचये; D8 संचलं (for संचयं). K4 पालने; G2 पालयन्. D7 T1 G1.4 पालयस्व (for पालनं च). K2-5 Bo.1.3-5 Da D2.3.5.6.8 G2 वा (for च). Dn T2 अयं वृद्धिं (Dn2 क्षयं वृद्धिं; T2 क्षयं शत्रौ) पालनं संचयं वा; D1 corrupt. K2 वा (for च). — b) K5 Bo.3-5 Dn D2.3.5.6.8 बुद्ध्या- (Dn1 D2.5 °द्धा)प्युभौ; D7 T1 G4 M [अ]प्युभावर्थौ; T2 ह्युभावर्थौ; G1.2 उभावर्थौ (for [अ]प्युभौ चार्थौ). K3 Dn संह(Dn1 °य)तौ; V1 B1.2 Da D5 संहितौ (for सहितौ). K3 Dn1 D3.5 M2 सर्वकामौ (for धर्म°). D4 [अ]प्युभौ लोकौ सहितौ चार्थावप्युभौ धर्मकामो (sic). — c) K2.3.5 V1 B1.3.4 Dn2 D2.6.8 ततश् (for अतश्). K1 Bo.5 त(K1 अ)तश्चान्यं; B2 ततश्चान्यान् (for अतश्चान्यन्). — d) K1 मतिमंतं; K5 Dn1 बुद्धिमत्तां; D1 °सतं; D4 °मिमां; D8 °मतां; G2 °मातं (sic) (for °मन्तं). D2.6 श्रयत्; T2 G1.4 श्रयीत.

40 a) B1 दांतो (for दीप्ता). Da1 om. बलवन्तं हिनस्ति. D7 T G1.4 M1 धनवंतं (for बलवन्तं) — b) D7 T1 G1.4 वर्तते (for वर्धते). K4 पाल्यमाणं. K5 Bo.3-5 Dn D2.3.5.6.8 पाल्य(B5 पश्य)ते वर्धमानं (for वर्धते पाल्यमानम्). — c) Ś1 K2 G1.2.4 M शत्रून्; B1 सकृद् (for शत्रुर्). B5 बुद्धा (for °द्ध्या). Ś1 (before corr.) K2.4 V1 B2 Da D1-3.5.6.8 वर्ध(Da °र्त)ते सीद(B2 m वर्ध)मानो; B1 वर्धते गाहमानो; Dn1 सीदते वर्तमानो; D4 °ते वर्धमाने; T2 G1.2 M °ते पीड्यमानो (for °ते वर्धमानो). — d) B1 Da2 बुद्धिः पश्चात्; S (G3 missing) बुद्धिपूर्वं (for बुद्धेः पश्चात्). D7 G2 यत्नं (for यत्तत्). — After 40, D7 T1 G4 read $43^{ab}$.

41 T1 G4 om. $41^{ab}$. — a) K3 Da D4 वीरः (for धीरः). — b) V1 सत्त्वे चाल्पे न; Bo.3-5 सर्वान्कामान्; D5 सत्त्वेनान्येन (for °नाल्पेन). K2.5 Dn2 प्राप्नुते; K3 V1 Bo.2-5 Dn1 D6-8 G1.2 M [आ]प्नुते; B1 [आ]प्यते; Da [आ]प्नु(Da1 °प्नु)ते; D2.3.5 [आ]श्नुते (for [आ]प्नुते). K2.5 Bo.1.3.4.5 (marg. as in text) D2-8 G2 ही(B1 दी)नदोषः (for °देहः). — G2 reads $41^{c}$–$42^{d}$ after $43^{ab}$. — c) K5 B Dn D2.3.5.6 यथात्मानं. D7 S (G3 missing) प्रार्थयन् (for °यते). Bo [ऽ]र्थदानैः; B1 [ऽ]र्थ्यमानैः; D6 [ऽ]र्थलाभैः (for °मानैः). — d) D1 श्रयः पात्रं; D5 T1 G1.4 M1.3 श्रियः पात्रं; D7 श्रेयं पा°; G2 श्रियं पा°; M4 प्रियः पा°. Dn1 च नाल्पं; D1.7 T1 G (G3 missing) [ऽ]प्य(D1 °भ्य)नल्पं (for ह्यनल्पम्).

42 For the sequence in G2, cf. v. l. 41. — a) K4 प्रग्रहीतः. K1 परासुर् (sic); K3.5 V1 Bo.1.3-5 Dn D2-8 S (G3 missing) प्रजासु; B2 Da प्रजानां

C. 12. 4395
B. 12. 120. 44
K. 12. 120. 44

दीर्घं कालमपि संपीड्यमानो
विद्युत्संपातमिव मानोर्जितः स्यात् ॥ ४२
विद्या तपो वा विपुलं धनं वा
सर्वमेतद्व्यवसायेन शक्यम् ।
ब्रह्म यत्तं निवसति देहवत्सु
तस्माद्विद्याद्व्यवसायं प्रभूतम् ॥ ४३
यत्रासते मतिमन्तो मनस्विनः
शक्रो विष्णुर्यत्र सरस्वती च ।
वसन्ति भूतानि च यत्र नित्यं
तस्माद्विद्वान्नावमन्येत देहम् ॥ ४४

लुब्धं हन्यात्संप्रदानेन नित्यं
लुब्धस्तृप्तिं परवित्तस्य नैति ।
सर्वो लुब्धः कर्मगुणोपभोगे
योऽर्थैर्हीनो धर्मकामौ जहाति ॥ ४५
धनं भोज्यं पुत्रदारं समृद्धिं
सर्वो लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषाः संभवन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत लुब्धान् ॥ ४६
संदर्शने सत्पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान्द्विषतां प्राज्ञः सर्वानर्थांस्तु सूदयेत् ॥ ४७

---

(for परेषु). —$^{b}$) K4 [अ]मूलं. K5 V1 B Dn D2. 3. 5–8 T1 G4 सर्वशो (for सर्वतो). T2 ह्यादधीत (for ऽभ्याददीत). K1 दूलं लक्ष्या सर्वतोभ्यारुदीत (sic). —$^{c}$) D1 दीर्घ- (for दीर्घं). K2. 3. 5 V1 B Da2 Dn D2–6. 8 M ह्यपि (for अपि). Da1 दीर्घं कालं ह्यपि पीड्यमानैर्; D7 T G1. 2. 4 दीर्घं कालं ह्य(T2 G1 °लम)रिभिः पीड्यमानो. —$^{d}$) D1 मानोर्जिताः. K2. 3. 5 V1 B Da Dn D2. 3. 5. 8 -संपातमपि वा नोर्जितः; D4 °मपि मानार्जितः; D6 -संपातवानोर्जितः; T2 -संपत्स्वपि नो निर्जितः; M -संपातस्त्वपि नो निर्जितः (for °मिव मानोर्जितः). D7 T1 G1. 2. 4 ड्युष्पा(T1 G4 पुष्पा-; G1 विद्यु)त्संपद्व्यवसायेन शक्या (D7 G2 °क्त्या).

43 For the sequence in G2, cf. v. l. 41. D7 T1 G4 read $43^{ab}$ after 40. —$^{a}$) D1 धनैर् (for धनं). —$^{b}$) K2–5 V1 B Da Dn D2. 3. 5–8 S (G3 missing) ह्येतद् (for एतद्). D1 corrupt. —$^{c}$) K1 D1. 7 T1 G1. 4 ब्रह्मायत्तं; V1 Bo. 1. 3–5 Dn D2. 3. 5. 6. 8 बुद्ध्यायत्तं (Dn2 °त्नं) (for ब्रह्म यत्तं). D2 om. from निवसति up to यत्र (in $44^{c}$). K5 बुद्ध्यायत्तं नित्यं तस्माद्विद्वान्नावमन्येत देहं (sic; cf. $44^{d}$). — D7 om. (hapl.) $43^{d}$–$44^{c}$. —$^{d}$) Da राजन् (for विद्याद्). K3 प्रधानं (for प्रभूतम्).

44 D2 om. up to यत्र; D7 om. $44^{abc}$ (cf. v. l. 43). —$^{a}$) M1 मतिमतो. —$^{b}$) Ś1 D4 शक्राविष्णू; D1 शक्राविष्णुर्. M ब्रह्म (for यत्र). —$^{d}$) D4 कस्माद्विद्वानवमन्येत. T2 G1 वित्तं (for देहम्).

45 $^{a}$) D1 लब्धं (for लुब्धं). D7 S (G3 missing) संप्रदानाद्धि (for °दानेन). —$^{c}$) Ś1 K1 D1 G2 सर्वे लुब्धाः; T2 स वै लुब्धः. B3 Da D5. 6. 8 कर्मगुणोपभोगैर्; D7 T G1. 2. 4 M1. 3. 4 सर्वगुणोपभोगे (G1 °गो). —$^{d}$) K1 योर्थे; D3 योर्थैन (for योऽर्थैर्). D5 हीने. K4. 5 D5. 8 धर्मकामो (for °कामौ). D7 S (G3 missing) योर्थैर्हीनः काम(G2 कर्म)धर्मौ हिनस्ति (T2 G1 M जहाति).

46 $^{a}$) K2 Dn भोगं (for भोज्यं). K1 पुत्रदारा; K3 Da2 Dn1 °दारैः; Da1 °दारे; G2 °दारान्. B4 समृद्धं; M परेषां (for समृद्धिं). —$^{b}$) K2. 3. 5 Bo. 2–5 Dn D4–7 T G1. 2. 4 सर्वं; D2. 3. 8 धनं (for सर्वो). M समृद्धिं (for परेषाम्). K1 सर्वे लुब्धाः प्रार्थयंते परेषां. —$^{c}$) B3 लुब्धैर्; Da2 लुब्धो; D1 लुब्ध- (for लुब्धे). B1 लोके (for सर्वे). —$^{d}$) B1. 2 Da प्रकुर्वीत; D2 प्रगृह्णाति; M [ए]व गृह्णीत (for प्रगृह्णीत). K2. 3 Dn D4 लुब्धं (for लुब्धान्).

47 $^{a}$) D4 संदर्शनेन (hypermetric); G1 स दर्शने. K2. 5 Bo. 3–5 Dn D2. 3. 5. 6. 8 संदर्शनेन (Dn2 संघर्षणेन) पुरुषं. —$^{b}$) Ś1 जघन्यमभि-; K2. 4 D1 प्रधानमभि- (for जघन्यमपि). D4 नोदयेत् (for चोदयेत्). ❀ Cv: चोदयेत् द्वाःस्थान्प्रति प्रेरयेत् । ❀ —$^{c}$) K1. 4 Bo–2. 5 D7. 8 T1 G4 आरंभा; D1. 2 आरंभाद्; M आरंभे. D4 द्विषता; T1 G2. 4 द्विषतः; T2 द्विषद्दे; G1 विषद्दे. D1 प्राज्ञाः; M1–3 प्राज्ञं. —$^{d}$) K1. 2 V1 B Da D1–3. 5. 8 T2 सर्वार्थांस्तु; K3. 4 Dn D4 °र्थांश्च; K5 D6 °र्थास्तु; T1 G1. 2. 4 M पापा(G1 M °पो)र्थास्तु (for सर्वानर्थांस्). K1. 3. 5 V1 Bo–3. 5 Da Dn D2–4. 6–8 S (G3 missing) प्रसूदयेत्; K2 D1 प्रसीद्°; K4 D5 G2 प्रसाद°; B4 प्रचोद° (for तु सूदयेत्).

धर्मान्वितेषु विज्ञातो मन्त्री गुप्तश्च पाण्डव ।
आप्तो राजन्कुलीनश्च पर्याप्तो राज्यसंग्रहे ॥ ४८

विधिप्रवृत्तान्नरदेवधर्मा-
नुक्तान्समासेन निबोध बुद्ध्या ।
इमान्विदध्याद्व्यनुसृत्य यो वै
राजा महीं पालयितुं स शक्तः ॥ ४९

अनीतिजं यद्यविधानजं सुखं
हठप्रणीतं विविधं प्रदृश्यते ।
न विद्यते तस्य गतिर्महीपते-
र्न विद्यते राष्ट्रजमुत्तमं सुखम् ॥ ५०

धनैर्विशिष्टान्मतिशीलपूजिता-
न्गुणोपपन्नान्युधि दृष्टविक्रमान् ।
गुणेषु दृष्टानचिरादिहात्मवा-
न्सतोऽभिसंधाय निहन्ति शात्रवान् ॥ ५१

पश्येदुपायान्विविधैः क्रियापथै-
र्न चानुपायेन मतिं निवेशयेत् ।
श्रियं विशिष्टां विपुलं यशो धनं
न दोषदर्शी पुरुषः समश्नुते ॥ ५२

C. 12. 4405
B. 12. 120. 54
K. 12. 120. 54

---

48 a) B1 धर्मार्थितेषु; D4 °न्वितश्च. K2. 3. 5 V1 B D (except D1) S (G3 missing) विज्ञाता. — b) K3 मंत्री गुप्ताश्च; D7 T1 G4 मंत्रगुप्तश्च; T2 G1. 2 M मंत्रगुप्तिश्च (for मन्त्री गुप्तश्च). D6 पांडवः. — c) K4 क्षतो; Da आप्तौ; D1 आप्ते; D4 आप्ता. K2 B1 Dn2 D2. 5. 6. 8 राजा; K3 राज- (for राजन्). — d) K1 Dn2 पर्याप्ते; D6 पर्याप्तौ. D7 S (G3 missing) राष्ट्रसंग्रहे (for राज्य°).

49 a) K2. 3. 5 Dn D2. 4. 6–8 S (G3 missing) विधिप्रयुक्तान् (for °प्रवृत्तान्). D6 -धर्मौ (for -धर्मान्). — b) Bo समाविन (sic); Da समानेन; D1 समये ते (for समासेन). D2 om. from ध up to 12. 121. 7. — c) B3 D8 इमां; Da हेमान्; D3. 5 इमं. B1. 3 Da D3. 5. 6. 8 G1 निदध्याद्; D4 अविद्याद् (for विदध्याद्). K4. 5 Bo. 3. 4. 5 (marg.) Dn D3. 5. 8 व्यति- (K4 °न)सृत्य; B1. 5 D7 T1 G2. 4 M2 अनु°; B2 व्यनुसृज्य; D4 ह्यनुसृत्य; D6 अभिसृज्य; T2 G1 अभिसृत्य (for व्यनु°). — d) M2 न (for स). D1 शक्यः (for शक्तः).

50 D2 om. 50 (cf. v. l. 49). — a) Da अनी- (Da2 om. अनी)तिनं; D6 अनीनजं; D7 S (G3 missing) सुनीति(G1 °त)जं. K2. 3. 5 V1 B Dn D3. 5–8 S (G3 missing) यस्य विधानजं; K4 D1 यद्यविधानजं; Da यस्य विधी(Da2 °धि)नजं (for यद्यविधानजं). — b) Bo हठप्रयुक्तं; B1 हयप्रणीतं. K2. 5 V1 B Da Dn D3. 5. 6. 8 विधिवत् (for विविधं). D7 T1 G4 धर्मप्रणीतं विधिवत्प्रसिध्यति; T2 G1. 2 M बुधप्रणीतं (G1 बुधः प्रणीता) विधिवत्प्रसिध्यते. — c) D1 om. न विद्यते. D7 निंदिते; T1 G2 निंदिता; T2 G1 निंद्यते; G4 निंदितं (for विद्यते). B2 (marg.) मतिर् (for गतिर्). D7 महीपते. — d) D7 स विद्यते; T2 G1. 2. 4 M स विंदते (for न विद्यते). K3 राष्ट्रगतं महत्सुखं; Dn राज्य(Dn1 °ज)सुखं ह्यनुत्तमं.

51 D2 om. 51 (cf. v. l. 49). — a) B2 बलैर् (for धनैर्). Dn2 D5 -पंडितान् (for -पूजितान्). — b) B1 अधि- (for युधि). T2 G1 सत्य- (for दृष्ट-). — c) D7 T G1. 4 M युक्तान् (for दृष्टान्). K2. 3 V1 B2 दृष्ट्वा नचिराद्. K4 D6 इव (for इह). K5 Bo. 3–5 Dn D3. 5. 8 गुणेषु दृष्ट्वा नचिरादिवात्मवान् (B5 °वांधान्); B1 °षु दृष्ट्वा नचिरादिहार्थवान्; Da °षु दृष्ट्वा नचिरात्मवान्; D1 °षु दृष्ट्वा नचरादिहत्मवान् (sic); G2 °षु युक्तानचिरान्महात्मवान्. — d) K2. 3. 5 Bo. 3–5 Dn2 D6. 8 यतो; D1 हतो; G2 ततो (for सतो). G1 सदोपसंधाय (for सतोऽभि°). G2 न हंति (for निहन्ति).

52 D2 om. 52 (cf. v. l. 49). — a) K3 D4 उपायं (for उपायान्). K5 V1 B D3. 6. 8 विविधे (B1 °धिवत्; D6 °विधैः) क्रियापथे; D7 S (G3 missing) विविधेषु कर्मसु (for विविधैः क्रियापथैर्). — b) K3 D4 S (G3 missing) चानुपायेषु; K4 चा[illegible]येन; Da जातुपायेन (for चानु°). K4 T2 मतिर् (for मतिं). — c) Da च शिष्टां; D7 S (G3 missing) समृद्धां (for विशिष्टां). D7 S (G3 missing) transp. यशो and धनं.

53 D2 om. 53 (cf. v. l. 49). — a) K1. 4 D4 विनिवर्तते; K2. 3. 5 Dn D6. 8 °वर्तितौ; V1 Bo. 3. 5 D3. 5 °वर्तिनौ; B1. 2 Da °वर्तिनो (for °वर्तने). K2. 3. 5 V1 B Da Dn D3–6. 8 यथा (for तथा). D1 प्रीतिप्रवृत्ते विनिवर्ते तथा; D7 S (G3 missing) प्रीति(D7 T1 G4 °तिं)प्रवृत्तिं विनिवर्तनं च. — b) B1 नेच्छन्स्य (sic);

C. 12. 4406
B. 12. 120. 55
K. 12. 120. 55

प्रीतिप्रवृत्तौ विनिवर्तने तथा
सुहृत्सु विज्ञाय निवृत्य चोभयोः ।
यदेव मित्रं गुरुभारमावहे-
त्तदेव सुस्निग्धमुदाहरेद्बुधः ॥ ५३

एतान्मयोक्तांस्तव राजधर्मा-
न्नृणां च गुप्तौ मतिमादधत्स्व ।
अवाप्स्यसे पुण्यफलं सुखेन
सर्वो हि लोकोत्तमधर्ममूलः ॥ ५४

इति श्रीमहाभारते शान्तिपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## १२१

युधिष्ठिर उवाच ।
अयं पितामहेनोक्तो राजधर्मः सनातनः ।
ईश्वरश्च महादण्डो दण्डे सर्वं प्रतिष्ठितम् ॥ १

देवतानामृषीणां च पितॄणां च महात्मनाम् ।
यक्षरक्षःपिशाचानां मर्त्यानां च विशेषतः ॥ २
सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम् ।

---

B2 Da विवृत्य; D1 निवृत्ति-; D7 T1 G1. 2. 4 विचार्य (for निवृत्य). — D1 om. 53c–54b. — c) K3 M2 गुरु-भावम् (for °भारम्). K1 G2 आहवेत्; K4 आवहत्; B1 आवहे; D6 आर्तवं (for आवहेत्). — d) D6 हे देव (for तदेव). G1 उदावहेद् (for °हरेद्).

54 D2 om. 54 (cf. v. l. 49). D1 om. 54ab (cf. v. l. 53). — a) K1–3 Dn2 M2 एतां (for एतान्). K2. 3. 5 V1 B Da Dn2 D3–6. 8 चर; D7 T2 G1. 2 M स्मर; T1 G4 सर (for तव). D5 दान-धर्मान् (for राज°). — b) B1. 2 च गुप्तां; D4 सुगुप्तौ (for च गुप्तौ). K1 मतिमाददत्स्व; K2. 4 D4. 8 °मादद- (D8 °ध)स्व; Da °मादधत्सु; M1. 3. 4 °मन्विधत्स्व (for °मादधत्स्व). — c) Da2 om. से पुण्य. K1–4 Dn2 D7 G2 M2 अवाप्यसे (K3 °प्य स); K5 आवा-प्यसे; D5 अवाप्ससे; T2 G1 तत्प्राप्स्यसे (for अवा-प्स्यसे). Da सुखेन ते (for सुखेन). — d) K3 D4 लोकोत्र सु-; K4. 5 V1 B Da Dn D3. 5. 6. 8 G2 M1. 3. 4 लोको नृप- (for लोकोत्तम-). D1 T1 G1 लोको हि सर्वो (D1 सर्वे हि लोको) नृपधर्ममूलः; M2 सर्व हि लोको नृपधर्ममूलं.

Colophon om. in D2: G3 missing. — *Sub-parvan:* Ś1 K V1 B Da Dn D1, 3–7 T2 G1. 2. 4 M राजधर्म. — *Adhy. name:* Da1 धर्मोपाख्यानं; Da2 धर्माख्यातं; D7 T1 G2. 4 राजवृत्तं; M1. 3 राजवृत्तिर्. — *Adhy. no.* (figures, words or both): B1 110; B3 Dn1 119; B4 116; Da1 Dn2 120 (as in text); D7 S (G3 missing) 122; D8 118. — *Śloka no.:* Da 57; Dn 56.

### 121

☞ G3 is missing for this adhy. (cf. v. l. 12. 112. 1).

1 D2 om. 1–7 (cf. v. l. 12. 120. 49). Ś1 D8 om. the ref. — a) D1 अहं (for अयं). — b) D6 धर्मराज्ञः (for राजधर्मः). — c) D7 S (G3 missing) कीदृशश् (for ईश्वरश्). K1. 4 B1. 3. 5 D3. 5–7 T1 G4 महान्दंडो; B2 Da सदा दंडो; B4 (marg. as in text) D4 महादंडे. — d) V1 G2 M1. 3 सर्वं दंडे (by transp.); D1 दंडे सर्व-; D7 T M2. 4 सर्वदंडे; G1 सर्ववर्मे; G4 सर्वदंड-. T2 G1 प्रतिष्ठितः.

2 D2 om. 2 (cf. v. l. 1). — d) K5 V1 B Da Dn D6. 8 साध्यानां (for मर्त्यानां). D3. 5. 6. 8 विशां पते (for विशेषतः).

3 D2 om. 3 (cf. v. l. 1). — b) Dn तिर्यग्योनि- (for तिर्यक्ष्वपि). K1 निवासिवान्; D4 °सितां; D6 °सिनं (for °सिनाम्). K3 तिरश्चां पिशिताशिनां. — c) D7 T2 G1. 2 सर्वस्यापि (for °ष्वपि).

सर्वव्यापी महातेजा दण्डः श्रेयानिति प्रभो ॥ ३
इत्येतदुक्तं भवता सर्वं दण्ड्यं चराचरम् ।
दृश्यते लोकमासक्तं ससुरासुरमानुषम् ॥ ४
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ ।
को दण्डः कीदृशो दण्डः किंरूपः किंपरायणः ॥ ५
किमात्मकः कथंभूतः कतिमूर्तिः कथंप्रभुः ।
जागर्ति स कथं दण्डः प्रजास्ववहितात्मकः ॥ ६
कश्च पूर्वापरमिदं जागर्ति परिपालयन् ।
कश्च विज्ञायते पूर्वं कोऽपरो दण्डसंज्ञितः ।
किंसंस्थश्च भवेद्दण्डः का चास्य गतिरिष्यते ॥ ७

भीष्म उवाच ।

शृणु कौरव्य यो दण्डो व्यवहार्यो यथा च सः ।
यस्मिन्हि सर्वमायत्तं स दण्ड इह केवलः ॥ ८
धर्मस्याख्या महाराज व्यवहार इतीष्यते ।
तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः ।
इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ॥ ९
अपि चैतत्पुरा राजन्मनुना प्रोक्तमादितः ।
सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ।

C. 12. 4419
B. 12. 121. 11
K. 12. 121. 11

---

4 D2 om. 4 (cf. v. l. 1). — a) K3 V1 B1.2 Da Dn M2 एवम् (for एतद्). — b) K5 V1 B Da Dn D3.5.6.8 दंडे; D7 G1 M2 सर्व- (for सर्वं). B2 (marg.) दंडेनैव (for सर्वं दण्ड्यं). K1.2.4 D1 दंडं; K3 D4.7 S (G3 missing) दंडे; K5 B Da Dn D3.5.6.8 वै स- (for दण्ड्यं). — c) K2 दृश्यता; K3 Bo.3–5 Dn D3.5.6.8 M पश्यता; K5 V1 B1.2 Da D7 T G1.2.4 पश्यतां (for दृश्यते). D4 दंडमासक्तं; D7 T G1.2.4 लोक आयत्तं (G1 °त्ता); M लोकमायत्तं (for °सक्तं). — d) G1 -मानवं (for -मानुषम्).

5 D2 om. 5 (cf. v. l. 1). — a) B4 इच्छामहे (for °म्यहं). K5 Bo.3–5 Da D3.5–8 S (G3 missing) श्रोतुं (for ज्ञातुं). — D4 om. (hapl.) $5^{d}$–$7^{e}$. — d) K4 D1 किंतपः; G1 किंदंडः (for किंरूपः). K1 किंपराजयः; K3 G1.2 °यणं; B4 °क्रमं (for °यणः).

6 D2.4 om. 6 (cf. v. l. 1, 5). — a) D8 किमात्मनः (for °त्मकः). G2 किमात्मा किमयं भूतः. — b) K5 Bo.3–5 Dn D3.5.6.8 कथंमूर्तिः (for कतिमूर्तिः). K4.5 V1 B1.3 Da Dn D3.5.6.8 कथं प्रभो; Bo.2.4.5 T1 G1.4 कथंप्रभः (for कथंप्रभुः). — c) K2.3.5 V1 B Da Dn D7 S (G3 missing) च; D3.5.6.8 हि (for स). — d) B2 Da प्रजासु च हितात्मकः; D6.7 S (G3 missing) प्रजा(M2 °ज्ञा)सु विहि°.

7 D2 om. 7 (cf. v. l. 1). D4 om. $7^{abcde}$ (cf. v. l. 5). — a) B1 Da कथं; G2 काश्चित् (for कश्च). — b) K1 जगंति; D1 जागंति (for जागर्ति). Dn D3.5 प्रतिपालयन् (for परि°). — c) Da कथं; D1 G2 काश्चित् (for कश्च). G2 प्रज्ञायते (for वि°). K5 पूर्वैं; T2 दंडः; G1 पूर्वः (for पूर्वं). — d) K4 V1 B Dn D3.5.6.8 [ऽ]वरो; Da [ऽ]वधो; D1 [ऽ]परे; M1.3 [ऽ]परा (for ऽपरो). K3 T2 G1.2 M दंडसंज्ञकः; B1 °संस्थितः; D1 °संतितः (for °संज्ञितः). — B3 om. $7^{e}$–$9^{d}$. — e) D6 किं सत्यंस्व (sic); M2.4 किंसंज्ञश्च (for किंसंस्थश्च). D7 T1 G1.4 [अ]भवद्; T2 G2 भवद्. Da1 दंडं. — f) Ś1 K2–5 B1.2.4.5 D2–5.8 M2 वास्य; T2 चात्र (for चास्य). K3 D1 इष्यति; K5 Dn2 D3.5.6.8 उत्तमा; V1 Bo–2.4.5 Da Dn1 उच्यते (for इष्यते).

8 B3 om. 8 (cf. v. l. 7). D3 om. the ref. — a) Da D7 S (G3 missing) कौरव (for कौरव्य). K3 को (for यो). — b) K5 V1 B (B3 om.) Da Dn D1–3.5–8 T G1.2.4 M1.3.4 व्यवहारो (D1 °र्यं). D7 S (G3 missing) [ए]व (for च). — c) K1 आयातं (for आयत्तं). — d) D7 S (G3 missing) धर्म (for दण्ड). V1 Bo–2.4.5 Da Dn2 D2.3.5–8 S (G3 missing) इति (for इह).

9 B3 om. $9^{abcd}$ (cf. v. l. 7). — a) K5 B4 Dn D2.3.5.6.8 धर्मसंख्या (for °स्याख्या). K4 समाराज (for महा°). D7 S (G3 missing) Cv धर्मस्यार्थे महीपाल. — b) K5 B4 D2.3.5.6.8 इहेष्यते (for इती°). — c) Ś1 लोकः; G3 लोपाः; Cv लोपः (as in text). K1–4 तु; G2 च (for न). G2 स्युर् (for स्याल्). — d) D1 लोकेष्वलोहतात्मनः (sic); D7 T G1.2.4 लोकेष्विह (T2 °व) महात्मनः; M1.3 लोकेष्वपि हितात्मनः; M2.4 लोकेषु विहि°. — e) K V1 B Da Dn D1–3.5.6.8 इत्येवं (K4 °व) (for इत्यर्थं).

10 b) G2 आत्मनः (for आदितः). — c) K1 सुप्रनेतेन (sic). — d) K4 प्रियाप्रिये समात्मना; D6 प्रिय-

C. 12. 4419
B. 12. 121. 11
K. 12. 121. 11

प्रजा रक्षति यः सम्यग्धर्म एव स केवलः ॥ १०
अथोक्तमेतद्वचनं प्रागेव मनुना पुरा ।
जन्म चोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ॥ ११
प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः ।
व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते ॥ १२
दण्डात्त्रिवर्गः सततं सुप्रणीतात्प्रवर्तते ।
दैवं हि परमो दण्डो रूपतोऽग्निरिवोच्छिखः ॥ १३
नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ।
अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥ १४
जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरावरः ॥ १५
असिर्गदा धनुः शक्तिस्त्रिशूलं मुद्गरः शरः ।
मुसलं परशुश्चक्रं प्रासो दण्डर्ष्टितोमराः ॥ १६
सर्वप्रहरणीयानि सन्ति यानीह कानिचित् ।
दण्ड एव हि सर्वात्मा लोके चरति मूर्तिमान् ॥ १७
भिन्दंश्छिन्दन्रुजन्कृन्तन्दारयन्पाटयंस्तथा ।
घातयन्नभिधावंश्च दण्ड एव चरत्युत ॥ १८
असिर्विशसनो धर्मस्तीक्ष्णवर्त्मा दुरासदः ।

---

माशंसमात्मना ; M2 प्रियाः प्रियसमा°. — c) K4 रक्षत ; V1 D4 रक्ष्यति. T2 G1 सत्यं (for सम्यग्). — f) B1 स एव (by transp.) ; D7 T1 G2.4 एव हि.

11 a) All MSS. (except Ś1 K1.3 D4 ; G3 missing) यथा (for अथ). — b) B1.2 Da तदा (for पुरा). — c) K1 तंमचोक्तं (sic) ; K2.3 D4 जन्मयोक्तं ; K5 V1 B Da Dn D2.3.5.6.8 T2 G1 यन्मयो(Bo °मो)क्तं (for जन्म चोक्तं). K5 B2 Dn D2.3.5.6.8 मनुष्येंद्र ; V1 Bo.1.5 वशिष्ठेन. — d) G1 ब्रह्मणा. K3 D4 हिं तत् (for महत्).

12 a) D1 प्रागर्धं (for प्रागिदं). Da1 चयनं ; Da2 चयतं ; D8 वचनः (for °नं). — D4 om. $12^{bc}$. — b) G1 ततः (for अतः). — c) Da1 व्यवहाराश्च. B1.2 व्याख्यानाद् (for चा°). — d) D4 सुप्रणीतात्प्रवर्तते (= $13^{b}$).

13 a) Ś1 दंडस् ; K2.5 V1 B Da Dn D2.3.5.8 दंडे ; K4 D1.6 दंड- (for दण्डात्). D7 G2 त्रिवर्गे. — b) K2.5 V1 B Da Dn D2.3.5.6.8 सुप्रणीते. K5 च वर्तते (for प्रव°). — d) B1 रूपचाग्निर् (sic). All MSS. (except Ś1 K1.4 D1 ; G3 missing) [उ]त्थितः (for [उ]च्छिखः).

14 b) Da1 D8 चतुर्दंडश् (for °दंष्ट्रश्). — D1 reads $14^{cd}$ twice. — c) K3 Bo.1.2 (marg. as in text) D4 T1 G1.2.4 M3 एकनयनः ; T2 नैकवदनः ; G2 नैननयनः (for नैक°). M2 अष्टपालो नैकनैय (sic). — d) Ś1 (before corr.) K1 D1 (second time) चतुर्दंष्ट्रोर्ध्व(K1 °व)- (for शङ्कुकर्णोर्ध्व-). D1 (first time) चतुर्द्रोंष्ट्रश्चतुर्भुजः (sic).

15 a) D1 जटी द्विजिह्वास्ताम्रास्या. — c) D1 एतद्रुपं न्विदुंत्युग्रं (corrupt). — d) T2 G1 M3 नित्यं दंडो (by transp.) ; M1.2.4 नित्यदंडो. K2.3.5 V1 B3.5 Dn D2.3.4 (also as in text).6.8 दुराधरः ; Bo-2.4 Da D7 T2 G1 दुरासदः (Da °दं) (for दुरावरः).

16 a) K2.5 V1 B Da Dn D2.3.5.6.8 धनुर्गदा (by transp.) ; D1 गदायनः. — b) Ś1 Dn1 मुद्गरं (for °रः). D6 शिरः ; M1 शरं ; M4 शराः (for शरः). T2 G1 त्रिशूलशरमुद्गरः. — c) Ś1 K1 D1 मुसुलं ; K2.3 V1 B3 Da Dn D2-6 मुशलं ; Bo-2.4.5 मुषलं (for मुसलं). K4 परशुं चक्रं ; Da2 lacuna. — d) K5 B1.3.4 Dn D2.3.5.6.8 पाशो ; V1 B2 प्राशो ; T G2.4 M2-4 प्रास- ; G1 M1 प्रासा (for प्रासो). K4 दंडश्च ; D1 दंडोर्ष्टि- ; T1 G4 दंडाष्टि- ; G1 दंषाष्टि- (for दण्डर्ष्टि-). Da -तोमरः ; G1 -तोमरं. D7 प्रासादं यष्टितोमराः.

17 a) K4 सर्वप्रहरणेयानि ; D8 सर्वत्र हरणीयानि. — b) B5 D7 S (G3 missing) यानि (for सन्ति). K1.2.4 B2 Da D1.2.6 यानि हि (Da1 °नि ह) ; B5 संतीह (for यानीह). — c) M4 दंडा. B3.4 D2.3.5.6.8 एवं दंडः (for दण्ड एव). K3.5 V1 B Da Dn D2.3.5-8 T1 G4 M स ; D4 lacuna (for हि). Bo.5 धर्मात्मा (for सर्वात्मा). T2 प्रगृह्य दंडः सर्वात्मा.

18 $18^{ab}$ = (var.) B. 12. 166. $57^{cd}$. — a) D2.3 भिंदच्छिदन् ; D7 T2 G1.2.4 M1-3 छिंदन्भिंदन् ; M4 छिंदान्भंदन् (for भिन्दंश्छिन्दन्). K1 कूजन् ; D1 मजन् ; T2 सृजन् (for रुजन्). — b) M2 मारयन् (for दार°). T2 पालयंस् (for पाटयंस्). G2 तदा (for तथा). — c) K5 D2.6.8 चाभि- (for अभि-). — d) B5 D5 एवं (for एव). D4 चरत्ययं ; D6 चरेत्युत ; M1.3 चरंत्युत (for चर°).

श्रीगर्भो विजयः शास्ता व्यवहारः प्रजागरः ॥ १९
शास्त्रं ब्राह्मणमन्त्रश्च शास्ता प्राग्वचनं गतः ।
धर्मपालोऽक्षरो देवः सत्यगो नित्यगो ग्रहः ॥ २०
असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवंकरः ।
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर ॥ २१
दण्डो हि भगवान्विष्णुर्यज्ञो नारायणः प्रभुः ।
शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते ॥ २२
यथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिः सरस्वती ।
दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः ॥ २३
अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले ।
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ ॥ २४
कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः ।
अप्रसादः प्रसादश्च हर्षः क्रोधः शमो दमः ॥ २५
दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये ।
हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषम् ॥ २६
अन्तश्चादिश्च मध्यं च कृत्यानां च प्रपञ्चनम् ।

C. 12. 4436
B. 12. 121. 28
K. 12. 121. 28

---

19 Cf. B. 12. 166. 84. — a) D2. 3. 6 खसिर्; M शास्ता (for असिर्). Ś1 K1 विशसने; D1 तिशमनो (sic); M4 विशसना. D4 वर्मस् (for धर्मस्). — b) K4 B1. 3. 4 Dn D3. 5. 7 T1 G2. 4 तीक्ष्णवर्मा; K5 V1 B0. 2. 5 Da D2. 6. 8 °कर्मा; T2 M2 °धर्मा (for °वर्मा). K5 V1 B0. 3–5 Dn D2. 3. 5. 6. 8 G1 दुराधरः (for °सदः). — c) M1. 3. 4 [s]सिश्च (for शास्ता). — d) B1 प्रजापतिः; Dn सनातनः (for प्रजागरः).

20 a) G1 शस्त्र- (for शास्त्रं). K1 ब्राह्मणं. All MSS. (except Ś1 K1. 2. 4 T2; G3 missing) मंत्राश्च. — b) D4 अतः; M1. 3 धर्म-; M4 शर्म (for शास्ता). K5 V1 B Dn D2. 3. 5. 6. 8 प्राग्वदतां; D7 T1 G1. 2. 4 प्रवचनं (for प्राग्वचनं). K3 वरं; K5 V1 B Dn D2. 3. 5. 6. 8 M1–3 वरः; D4 विदुः; D7 T1 G1. 2. 4 परं; M4 परः (for गतः). — c) D1 om. from धर्मपालो up to नारायणः (in 22b). D4 [s]वरो (for sक्षरो). D7 S (G3 missing) गोपः (for देवः). — d) K5 V1 B Da Dn [s]प्रजः; B2 (marg.) व्रजः (for ग्रहः). D7 S (G3 missing) सत्यको नित्यको ग्र- (D7 गृ)हः.

21 D1 om. 21 (cf. v. l. 20). — a) D4 आसगो (for असङ्गो). — b) Ś1 K1. 2. 4 मनोज्येष्ठः; K3 V1 B1 Da Dn D6. 7 T G1. 4 M4 मनुर्ज्येष्ठः; K5 मनुनेष्ठः; B0. 2–5 D2. 3. 5. 8 मुनिर्ज्येष्ठः (for मनुर्ज्येष्ठः). K3 शिवंकरं. — c) Da1 दंडश्च; D2. 3 खड्गस्य (for दण्डस्य). — d) D6 युधिष्ठिरः.

22 D1 om. up to नारायणः (cf. v. l. 20). — a) M1 [s]पि (for हि). Da विष्णुं. — b) K4. 5 V1 B1. 2 Da Dn दंडो (for यज्ञो).

23 a) K2. 5 B0. 3–5 Dn D2. 3. 6–8 T1 G1. 4 M1. 2. 4 तथोक्ता; K3 T2 G2 M3 तथोक्तो (for यथोक्ता). D2. 3 Cv ब्रह्मकल्पेति; D4 T2 ब्राह्मकन्येति (for ब्रह्म°). ❀ Cv: ब्रह्मकल्पेत्यत्र ब्रह्मणो वेदस्य कल्पा कल्पना । ❀ — b) K1. 4 D1 G1 लक्ष्मीन् (sic); K2. 3 D4 M2 लक्ष्मी (for लक्ष्मीर्). K3 T2 G1 M4 नीति-; K5 B0. 2–5 D2. 3. 5. 6. 8 इति; Da इव; Dn वृत्तिः (for नीतिः). — d) K5 विष्णुविग्रहः.

24 a) K1 Dn2 D1. 2 अर्थानर्थः (K1 °र्थं). — b) K2 धर्माधर्मं; D1 lacuna; D4 °धर्मो. K3 महाबले; K4 V1 B Da D2. 3. 5–8 T2 G2 M2 बलाबलौ (K4 °लं). — c) B4 सौभाग्यं; D1 दुर्भग्यं (sic) (for दौर्भाग्यं). — d) B1 Da पुण्यापुण्यौ (Da2 °ण्य-). K1. 2. 4 गुणागुणे.

25 a) T2 G2 दिवस-. D7 T1 G1. 2. 4 क्षणं. — c) N (except Ś1) अप्रमादः प्रमा(D1 °सा)दश्च. — d) K1. 4 हर्षक्रोधः; K2. 3. 5 V1 B Da Dn D2. 3. 5. 6. 8 हर्षक्रोधौ; D1 हर्षाः क्रोधः; D7 T G1. 2. 4 M1. 3. 4 हर्षः शोको; M2 हर्षशोकौ (for हर्षः क्रोधः). D7 T2 G1. 2 M1. 3. 4 दमः शमः (by transp.); T1 G4 M2 मदः शमः.

26 b) D1 भयाभवे; D2 M4 °भयौ; G1 °वहे (for °भये). — Da1 om. 26cd. — c) D6 तथा (for तपो). — d) D4 विषाविषे; D7 T G1. 2. 4 °मृते (for °विषम्).

27 a) B1. 5 D7 T1 G1. 4 मध्यश्च. — b) D7 T1 G2. 4 कृतानां (for कृत्यानां). M2. 4 प्रपंचना. — c) K1–3 V1 B1 Da1 D1. 4. 8 दमः; D6 M1. 3 मंद- (for मदः). D1. 4 प्रसादो; D2 प्रमादौ; D8 प्रमदो (for प्रमादो). K1. 2. 4 D1 [s]मर्षश्; K3 हर्षश्; D4 [s]धर्मश् (for दर्पश्). D7 T1 G4 मदप्रमोददर्पाश्च. — d) Ś1

C.12.4436
B.12.121.28
K.12.121.28

मदः प्रमादो दर्पश्च दम्भो धैर्यं नयानयौ ॥ २७
अशक्तिः शक्तिरित्येव मानस्तम्भौ व्ययाव्ययौ ।
विनयश्च विसर्गश्च कालाकालौ च भारत ॥ २८
अनृतं ज्ञाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च ।
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ ॥ २९
तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा ।
विराद्धिश्चैव राद्धिश्च कार्याकार्ये बलाबले ॥ ३०
असूया चानसूया च धर्माधर्मौ तथैव च ।
अपत्रपानपत्रपे ह्रीश्च संपद्विपच्च ह ॥ ३१
तेजः कर्मणि पाण्डित्यं वाक्शक्तिस्तत्त्वबुद्धिता ।
एवं दण्डस्य कौरव्य लोकेऽस्मिन्बहुरूपता ॥ ३२
न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम् ।
भयाद्दण्डस्य चान्योन्यं घ्नन्ति नैव युधिष्ठिर ॥ ३३
दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः ।
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ॥ ३४
व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर ।

---

शस्त्रं; D7 दंभा-; T2 G2 M डंभो; G1 डंभं (for दम्भो). D7 -धैर्यौ. K4 नयाययौ; D1 बथानयौ.

28 G1 om. (hapl.) $28^{ab}$. —a) K3 अशक्ति; D4 अशक्ति-. K5 V1 B2-5 Dn D2. 3. 5. 6. 8 M2 एवं (for एव). —b) K1 मनः-. D1 -स्तंभो; D7 -स्तंभं. —c) Da विलयश् (for विन°). B2 विसक्तश् (for °र्गश्). B0. 3-5 D2. 3 (before corr.). 5. 6. 8 विनयश्चापि सर्ग(B0. 5 संग)श्च; D1 विरसं यश्च विसर्जश्च (corrupt). —d) K5 V1 B0. 3-5 D3. 5. 6. 8 लोकालोकश्च; D2 लोकश्चय**; M2 लोकालोकौ च (for कालाकालौ च). D7 S (G3 missing) कौरव (for भारत).

29 K2 om. $29^{a}$-$30^{b}$. —a) K5 अनृत-. K1 ज्ञज्ञता; K3. 5 V1 B Da Dn D2-6. 8 ज्ञानिता (D4 °नना); K4 ज्ञानता; D7 T G1. 2. 4 M चाज्ञता (for ज्ञाज्ञता). B1 नित्यं (for सत्यं). —b) Ś1 श्रद्धाश्रद्धा. —c) B1 क्लीबतो. —d) G1 लोभालोभौ (for लाभालाभौ). B2 लाभो जयपराजयौ.

30 K2 om. $30^{ab}$ (cf. v. l. 29). —a) D4 -मन्युर्; D7 T G1. 2. 4 [अ]स्युर्म (for मृत्युर्). —b) K1 आगमानागमा; D1 आगमानगमौ. —c) K2. 3 विशुद्धिश्चाविशुद्धिश्च; K4 विगंधिश्चैव गंधिश्च; K5 V1 B Da Dn D2. 3. 5. 6. 8 विरोधश्चाविरोधश्च; D4 विशुद्धिश्चैव शुद्धिश्च; T2 विराधिश्चाविराधिश्च; G1 विराधिश्चापराद्धिश्च; G2 विराद्धिं चैव राद्धिं च. —d) K3 M2 कार्याकार्यं (M2 °र्यौ). K3 D4 बलाबलं.

31 M2 om. $31^{ab}$. V1 reads $31^{ab}$ on marg. —a) D1 वा (for the first च). K5 [अ]नुसूया. —b) D1 धर्माधर्मो; D7 S (M2 om.; G3 missing) धर्मचर्या (for धर्माधर्मौ). —c) Ś1 K1. 2. 4 D1 अपत्रापोनपत्रापो (K1 °पत्रपौ; D1 °पुत्रापै); B0. 3-5 D2. 3. 5. 6 अपत्रपानपत्रपा; B1 सापत्रपानपत्रपे; Da अपत्रपानपत्राप; D4 °नपत्रपवे च (sic); G2 °पत्रेह; M2 °पत्रपौ; M4 °बनत्रपे*. —d) D1 ह्रीच्च; D8 भीश्च; G1 ह्रीश्री (for ह्रीश्च). K1 समृद् (for संपद्). K5 विपद एव च (hypermetric); D4 lacuna (for विपच्च ह). Dn -पदं (for च ह).

32 a) K5 तेजाः. K2-5 B D (except D1. 5) S (G3 missing.) कर्माणि. D1 पंडितं (for पाण्डित्यं). —b) V1 B1. 2 Da वाग्मित्वं; D2 चावच्छक्तिस (sic) (for वाक्शक्तिस्). K4 तत्त्वबुद्धिना; D4 तनुबुद्धिता; D6 तत्त्वबुद्धिताः; D7 S (G3 missing) बुद्धितत्त्वता (D7 T1 G4 °ताः). —c) D6 दंडश्च. D7 T1 G2. 4 लोकेस्मिन् (for कौरव्य). —d) D4 लोकास्मिन्; D7 T1 G2. 4 जागर्ति (for लोकेऽस्मिन्).

33 a) K3 तथा (for न स्याद्). B1 Da D7 T G1. 4 M2. 4 यदि ह; B4 G2 यदि हि; D8 यदा ह (for यदीह). G2 दंडे. K5 B3. 4 D2. 3. 5. 6. 8 वै दंडः (by transp.). D7 S (G3 missing) हि (for वै). —b) K1. 2. 4 प्रमाथेयुः; D1 प्रमाप्येयुः; M2 प्रथमेयः (for प्रमथेयुः). —c) Da1 दंडश्च. All MSS. (except Ś1 K1. 2 D1; G3 missing) न (for च). —d) K2. 3. 5 V1 B D (except D1) S (G3 missing) च (for न). B3 Da युधिष्ठिरं (Da °रः).

34 a) Dn2 दंड्येन; M4 दंडे ह (for दण्डेन). K4 D2. 4 रक्षमाणा; D1 वक्ष्यमाणा. —c) D7 वर्तयंतीह (for वर्ध°). —d) D1 दंड-. T2 परायणः.

35 a) B1 D7 S (G3 missing) व्यवस्थापयते. D7 T G1. 2. 4 नित्यम् (for क्षिप्रम्). —b) K1. 2. 4 B0 D1. 4 इदं (for इमं). K3 धर्मं; D6 लोक- (for लोकं). K1 नरेश्वरे; K4 B3. 4 G1 °रं; B1. 2 Da °रः. —c) T1 G2. 4 व्यवसितो. —d) K1 ब्रह्मणेषु. K1.

सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ॥ ३५
धर्मयुक्ता द्विजाः श्रेष्ठा वेदयुक्ता भवन्ति च ।
बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः ॥ ३६
प्रीताश्च देवता नित्यमिन्द्रे परिददत्युत ।
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ॥ ३७
प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः ।
तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्ति तासु च ॥ ३८
एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः ।
रक्षन्प्रजाः प्रजागर्ति नित्यं सुविहितोऽक्षरः ॥ ३९
ईश्वरः पुरुषः प्राणः सत्त्वं वित्तं प्रजापतिः ।
भूतात्मा जीव इत्येव नामभिः प्रोच्यतेऽष्टभिः ॥ ४०
अददद्दण्ड एवास्मै ध्रुवमैश्वर्यमेव च ।
बले नयश्च संयुक्तः सदा पञ्चविधात्मकः ॥ ४१
कुलबाहुधनामात्याः प्रज्ञा चोक्ता बलानि च ।
आहार्यं चाष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ॥ ४२
हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च ।

C. 12. 4452
B. 12. 121. 44
K. 12. 121. 44

---

2. 4 एव तिष्ठते; $K_{3.5}$ $D_7$ $T_1$ $G_4$ $M_{1.3.4}$ अवतिष्ठति; $D_4$ $T_2$ $G_2$ $M_2$ एव तिष्ठति.

36 [a]) $M_4$ कर्मयुक्ता (for धर्म°). $K_{3-5}$ $V_1$ B (except $B_1$) D S ($G_3$ missing) द्विज- ($K_4$ $D_8$ °जः) (for द्विजाः). — [b]) $Dn_1$ $D_{2.6}$ देवयुक्ता; $Dn_2$ दैव°; $G_1$ वद्य° (sic) (for वेद°). $D_4$ $M_1$ हि; $M_{3.4}$ ह (for च). — [c]) Bo Da $Dn_1$ $D_{3.5-8}$ $M_{1.4}$ देवेभ्यो (for वेदेभ्यो). — [d]) $G_1$ यः प्रीणयति देवताः.

37 $K_5$ om. (hapl.) $37^{a}$–$38^{b}$. — [a]) $B_1$ प्रीत्या; $Dn_1$ प्रीतिश्; $G_1$ युताश् (for प्रीताश्). $D_7$ S ($G_3$ missing) लोकम् ($T_2$ $G_1$ °के) (for नित्यम्). — [b]) $T_2$ मित्रं; $G_1$ मित्रे (for इन्द्रे). $K_{1.3}$ परिददंति; $K_4$ $V_1$ B Da Dn $D_{2.3.5.6.8}$ परिवदंति; $D_7$ $T_1$ $G_{1.2.4}$ $M_{1.3.4}$ प्रतिददति; $T_2$ प्रतिपदति; $M_2$ प्रतिददाति (for परिददति). Dn [अ]पि (for [उ]त). — [c]) $B_1$ अर्घं (for अन्नं). $T_2$ $G_1$ दास्यति (for ददाति). $G_1$ शक्तं (for शक्रश्). — [d]) $D_7$ S ($G_3$ missing) अनुगृह्णन् (for [अ]प्यनु°).

38 $K_5$ om. $38^{ab}$ (cf. v. l. 37). — [a]) Da भूतात्मा (for प्राणाश्च). — [b]) Da $D_1$ प्रतिष्ठितः. — [c]) $D_7$ T $G_{2.4}$ M प्रतिष्ठंति. — [d]) $K_1$ दंडौ; $K_4$ दंडे. $B_1$ वः (for च).

39 [a]) $B_{1.2}$ Da प्रयोजयंश्; $D_7$ $T_1$ $G_4$ °जनं. $M_{1.3.4}$ [ए]ष (for [ए]व). — [c]) $G_2$ नित्यं (for रक्षन्). $K_{2.3.5}$ $V_1$ B D S ($G_3$ missing) स जागर्ति (for प्रजागर्ति). — [d]) $Ś_1$ $K_{1.4}$ दंडः (for नित्यं). $B_{1.4.5}$ Da Dn स्ववहितो; $G_2$ संविहितो (for सु°). $D_6$ सुविहिताक्षरः.

40 [b]) $D_1$ सत्त्व-. $K_{2.3}$ $V_1$ $Bo_{.3-5}$ Dn $D_{1-3.5.8}$ चित्तं; $D_7$ S ($G_3$ missing) वृत्तं (for वित्तं). — [c]) $D_4$ भूत (for जीव). $K_{2.3.5}$ $B_{3.4}$ Dn $D_{3-5.7}$ $M_2$ एवं (for एव). — [d]) $K_1$ प्रइयते (sic) (for प्रोच्यते).

41 [a]) $K_3$ सौददद्; $B_1$ आददद्; $D_7$ $T_1$ $G_4$ आयत्ता-; $T_2$ आयत्त-; $G_{1.2}$ $M_{1-3}$ आधत्त ($G_1$ °त्तं); $M_4$ असक्त (for अददद्). All MSS. (except $Ś_1$; $G_3$ missing) दंडम्. $K_5$ $B_2$ एवासौ; $D_7$ S ($G_3$ missing) एतस्मै (for एवास्मै). — [b]) $G_1$ धूपम् (for ध्रुवम्). — [c]) $D_7$ S ($G_3$ missing) बलं (for बले). $K_5$ $Bo_{.3-5}$ $D_{2.3.5.6.8}$ न चापि; $D_7$ T $G_{1.4}$ नयैश्च; $M_{1.3.4}$ नयेन; $M_2$ नयं च (for नयश्च). $D_7$ T $G_{1.4}$ M संयुक्तं. — [d]) $Ś_1$ स वा (for सदा). $K_{1.4}$ $D_1$ स पापे च (for सदा पञ्च-). $D_7$ T $G_{1.4}$ M -विधात्मकं.

42 [a]) $K_{2-4}$ $Bo_{.3-5}$ Dn $D_{1-3.5.6.8}$ कुलं ($D_1$ °ले) बहुधनामात्याः; $K_5$ कुलं वर्गध°; $V_1$ $B_1$ कुलं चाहुधं°; $B_2$ Da कुलं बहुविधामात्याः; $D_7$ क्षुद्रमूला धना°; $T_1$ $G_2$ मूलमाहुधं°; $T_2$ कुलमूला ध°; $G_4$ $M_2$ corrupt. — [b]) $Bo_{.5}$ प्रज्ञाश्. $K_{2.5}$ Dn $T_2$ $G_2$ प्रोक्ता (for चोक्ता). $D_7$ $T_1$ $G_{2.4}$ धनानि (for बलानि). $K_{2.3.5}$ $V_1$ $B_{2-4}$ Dn $D_{2-6.8}$ तु (for च). — [c]) $K_4$ आहार्यैश्; $B_{3.4}$ $D_{3.5.6}$ अहार्यं; $G_1$ अभयं (for आहार्यं). $K_2$ $D_7$ T $G_{2.4}$ $M_{3.4}$ चाष्टकं; $K_3$ $Bo_{.5}$ Dn अष्टकैर्; $V_1$ $B_{1.2}$ Da अष्टकं; $D_1$ चाध्वकैर् (for चाष्टकैर्). $Dn_1$ दिव्यैर्; $D_7$ $T_1$ $G_{2.4}$ द्रव्ये. ❀ Cn: आहार्यमर्जनीयम् । ❀ — [d]) $B_1$ धनम् (for बलम्). $K_3$ $D_4$ एकं; $M_4$ अन्ये (for अन्यद्). $K_4$ $D_6$ युधिष्ठिरः.

43 [a]) $T_1$ [s]श्व-. $D_4$ तथा (for रथाः). $K_5$ om. (hapl.) from पत्तिर् up to अश्वारोहाः (in $44^{c}$). $T_1$ पत्तीर्. — [b]) $M_2$ गावो (for नावो). $K_4$ चिह्न (sic)

C. 12. 4452
B. 12. 121. 44
K. 12. 121. 44

देशिकाश्चारकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥ ४३
अष्टाङ्गस्य तु युक्तस्य हस्तिनो हस्तियायिनः ।
अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ॥ ४४
भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः ।
कोशो मित्राणि धान्यं च सर्वोपकरणानि च ॥ ४५
सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः ।
राज्यस्य दण्ड एवाङ्गं दण्डः प्रभव एव च ॥ ४६
ईश्वरेण प्रयत्नेन धारणे क्षत्रियस्य हि ।
दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम् ।
राज्ञां पूज्यतमो नान्यो यथाधर्मप्रदर्शनः ॥ ४७
ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ।
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथापरः ।
तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः ॥ ४८
व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते ।
मौलश्च नरशार्दूल शास्त्रोक्तश्च तथापरः ॥ ४९
उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः ।

---

(for विष्टिस्). — c) K2.3 D6 T2 G1.2 M1.3.4 देशि- (T2 °श)काश्. K2 V1 B Dn D2.3.5.6 चाविकाश्; K3 Da D1.4.7.8 S (G3 missing) चारिकाश् (D1 °कात्) (for चार°). B2 Da चापि (for चैव). — d) D1.2 अष्टांग-.

44 K5 om. up to अश्वारोहाः (cf. v. l. 43). — a) K1 सुयुक्तस्य; K2.3 [अ]नु°; D4 [अ]नुरक्तस्य (for तु युक्तस्य). V1 Da Dn2 D6–8 T G1.2.4 M1.3.4 अथ चांगस्य युक्तस्य; B Dn1 D2.3.5 M2 अथ वां(B1 सं)गस्य युक्तस्य; D1 corrupt. — b) B Dn D2.3.5–8 T G1.2.4 M रथिनो (for हस्तिनो). D6 हस्त- (for हस्ति-). K4 -यायनः. — c) D6 अश्वरोहाः. K5 पादाताश्चाथ; D1 पदाताश्च. — d) K5 om. रसदाश्च ये. K4 मंत्रदाश्; D1 मंत्रदाचू; D7 T1 G1.2.4 रथिकाश्; T2 रथकाश्; M2–4 रथदाश् (for रसदाश्).

45 a) K4 B1 प्राड्विकाकाश्; D4 प्राड्विवा°; D6 प्राड्विवाकश्. — b) K1–3 Da1 D1.4.7 T G1.2.4 देवचिंतकाः. — c) K5 V1 B Da D3.5 कोषो; D1 केशो; D7 T G1.2.4 M2 कोशं; M1.3.4 कोश-.

46 a) D1 [आ]रंगं; D2.6 [अ]ष्टांग- (for [अ]ष्टाङ्गं). — K4 om. (hapl.) $46^{bc}$. V1 reads $46^{bc}$ on marg. — b) K3 B2 D4 M2 इति; K5 इव (for इह). D7 T1 G2.4 तं; T2 G1 M तद् (for यद्). D1 विदः. — c) K3.5 V1 B Da Dn D2.3.5.8 दंडम् (for दण्ड). S (G3 missing) [अं]तो (T2 °ते) (for [अ]ङ्गं). — d) D4 दंडाः; G1 M1.3 दंड-. B1 प्रभवम्.

47 a) D1 ईश्वरस्य. D7 S (G3 missing) प्रसङ्गेन (for प्रयत्नेन). — b) K5 Dn D7 S (G3 missing) कारणात्; V1 Bo.1.3–5 D2.3.5.6.8 धारणात्; B2 धीरेण; Da धारणा (for धारणे). K1.2.4 B2 Da D1 इ; K3.5 V1 Bo.1.3–5 Dn D2–6.8 T G1.4 च (for हि). — c) Da दंडः; T2 दक्षः (for दत्तः). B1 समानार्थ-; D7 S (G3 missing) सदा गोप्ता (for समानात्मा). — d) B1 हीनं (for हीदं). K5 T2 G1 दंडो हीदः (T2 G1 दंडोपायः) सनातनः. — e) Ś1 राज्ञः; K1.4 Da1 D1 राज्ञा; K3 D4 दंडात्; D7 S (G3 missing) राजा (for राज्ञां). K5 Bo.3–5 D2.3.5.6.8 पुण्यतमो; K4 पूजि° (sic); Da पूज्यतमा (for °तमो). — d) K3 V1 Bo.2.3.5 Da D2.3.6 यथाधर्मं; K5 B4 Dn D4.7 T1 G2.4 M2 °धर्मः; D1 °शर्मं (for °धर्म-). K3.5 V1 B1.3–5 Dn D2.3.5.6.8 M2 प्रदर्शितः; K4 D1 T2 G1 °र्शनः; V1 Da प्रदर्शितं; B2 प्रदेशयेत्; D4 प्रदिशितः; D7 T1 G2.4 तथात्मभिः; M1.3.4 -प्रदर्शकः (for °नः).

48 a) B1 T2 ब्राह्मणा; D7 T1 G1 ब्राह्मणो; G2.4 ब्रह्मणो (for ब्रह्मणा). — b) D1 D2.6..8 स्वकर्म-; M1 स धर्म- (for स्वधर्म-). — c) G2 भर्तुः. K3 Da उत्पन्ना. ❀ Cn: भर्तृप्रत्ययः। भर्तारौ द्वौ विवदमानौ प्रत्ययः कारणं यस्य। ❀ — d) G1 व्यवस्थानस् (for °हारस्). D7 S (G3 missing) तथाविधः; D8 °परं (for °परः). — e) Ś1 K1 D1 तस्याद्य; V1 तस्माद्यत् (for तस्माद्यः). D4 सिंहतो; M1.3.4 विहितो; M2 कथितो (for सहितो). — f) M2 -लक्षणं. — After 48, D7 T G1.2.4 read (for the first time) $50^{cd}$ (with var.), repeating it in its proper place.

49 Da2 D5 om. (hapl.) $49^{a}$–$50^{b}$. — b) D6 om. (hapl.) from उच्यते up to प्रत्यय (in $50^{d}$). — c) K4 मौलिश्; B1 D2 मौनश्; D1 इमौ; D7 G1.2 एवं; T1 G4 मूलं; T2 मौलं (for मौलश्). — d) D1 corrupt; D7 S (G4 missing) शिष्टोक्तश् (for शास्त्रोक्तश्).

50 Da2 D5 om. $50^{ab}$; D6 om. up to दण्डप्रत्यय (cf. v. l. 49). — c) K3 भक्तो (for उक्तो).

ज्ञेयो न स नरेन्द्रस्थो दण्डप्रत्यय एव च ॥ ५०
दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः ।
व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥ ५१
यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शकः ।
धर्मप्रत्यय उत्पन्नो यथाधर्मः कृतात्मभिः ॥ ५२
व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर ।
त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ॥ ५३
यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः ।
व्यवहारश्च यो दृष्टः स धर्म इति नः श्रुतः ।
यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ॥ ५४
ब्रह्मा प्रजापतिः पूर्वं बभूवाथ पितामहः ।
लोकानां स हि सर्वेषां ससुरासुररक्षसाम् ।
सम‍नुष्योरगवतां कर्ता चैव स भूतकृत् ॥ ५५
ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।

C. 12. 4467
B. 12. 121. 59
K. 12. 121. 59

---

K3 यस्यापि; D4 यथापि (for यश्चापि). — b) M2 भर्तुः. D8 -लक्षणाः; M2 -लक्षणं. — D7 T G1.2.4 read 50cd (for the first time) after 48. — c) K2.3.5 V1 B0.2.5 Dn D2.6.8 T1 (first time).2 G2 (both second time).4 (first time) नः; B3.4 D3.5 यः; T2 G1.2 (all first time) [ऽ]न्यः (for न). K4 सु- (for स). K4 सुरेंद्रस्थो; B1 नरेंद्राणां; G1 (first time) °द्रः स. ❋ Cn: नः अस्माभिः क्षत्रियैः। ❋ — d) K2.3.5 B0-4 Dn1 D4.5.8 T2 (first time) G1.2 (both both times) M2 दंडः. B3 उच्यते (for एव च).

51 a) K3 Dn1 D4 G1 दंडः; K5 lacuna; D1 दृष्ट- (for दण्ड-). K4 [ऽ]सि; Da M हि (for [ऽ]पि). — b) D4 व्यवहारात्मका; G1 °त्मक-. — c) D1 व्यवहाराः. T1 G4 ततो (for स्मृतो). — d) K3 देव-; G2 दैव- (for वेद-).

52 a) Da देव- (for वेद-). B1 -प्रसूतार्था; B4 -प्रसूतात्मा. — b) K5 V1 B D (except D1.4.8) S (G3 missing) गुणदर्श(T1 G4 °र्शि)नः (for °र्शकः). — c) K3 D4 -दृष्टोपि; K5 V1 B Da Dn D2.3.5-8 S (G3 missing) उद्दिष्टो (for उत्पन्नो). — d) D7 S (G3 missing) यश्च (for यथा-). K1.2 B0.4 Da D1.7 G2 -धर्म-; K3.4 V1 B1.3 Dn D2.3.5.8 -धर्मं; K5 D6 -धर्मै (for -धर्मः). D4 क्षतात्मभिः (for कृता°).

53 a) B2 व्यवहार-; D1 °हाराः. D6 स्मृतो यश्च (for प्रजागोप्ता). — b) V1 B2 ब्रह्मविद्यो; B4 D2.3.5-7 S (G3 missing) °दृष्टो; Da धर्मविद्यो; D4 धर्मदर्शि-; D7 ब्रह्मादिष्टो (for ब्रह्म°). Da युधिष्ठिरः; M1-3 यथाविधि. — c) D4 धारयते; M4 सारयति (for धार°). K2.4 लोको. — d) B1 सत्यार्थ- (for सत्यात्मा). D8 भूतिदर्शनः (for °वर्धनः).

54 a) D7 यच्च. K4 दंडा; D7 G1 दृष्टः (for दण्डः). D1 दृष्टोतो; D4 दृष्टौ नो; T2 दृष्टोन्यो (for दृष्टो नो). — b) D1 व्यवहाराः; D6 °हार-. — c) K4.5 V1 B Da Dn D2.3.5.6.8 दृष्टो यः (by transp.). — d) K5 V1 B1.2 Da Dn D6.7 S (G3 missing) वेद (for धर्म). K1 D1 G1.2 न श्रुतः; K2.5 B3.4 D2.3.5.6.8 M1.3.4 नः (M1.3.4 न) श्रुतं; K3 V1 B1.2 Da Dn निश्चितं; K4 B0.5 विश्रुतः; D4 हि श्रुतः; D7 G4 T M2 नः (T M2 न) श्रुतिः (for नः श्रुतः). — e) D2 वेदा; D4 देवः (for वेदः). G2 नो (for वै). — f) D1 स*त्पथः (for स सत्पथः).

55 a) D2 ब्रह्म. K3-5 V1 B Da Dn D3-8 S (G3 missing) पितामहः (D6 °ह; D8 °हा) (for प्रजापतिः). — b) D7 S (G3 missing) भगवांश्च (for बभूवाथ). K3-5 V1 B Da Dn D3-8 T1 G1.2.4 M प्रजापतिः (for पितामहः). — c) D7 T G1 M स लोकानां (by transp.); G2.4 सर्वलोका. D7 च (for हि). D4 सर्वेण (for °षां). — f) K1 भूभूतां; D1 भूतभृत्; D4 भूतिकृत् (for भूत°).

56 a) K2-5 V1 B D (except D1.7) [ऽ]न्यो (for नो). G1 यो (for ऽयं). Ś1 K1.4 V1 D1 [ऽ]यं व्यवहारो (by transp.). — b) M2 भर्तुः (for भर्तृ-). — c) K2.3 B0.2-5 Dn D2.3.5.6.8 अथोवाच; K5 अथावोचं; V1 B1 अवोचं यद्; Da अवोचं च (for अवोचाम).

57 Cf. Manu. 8. 335. — b) B3 Dn चैव; D4 वाथ (for चाथ). — c) K4 Da G1 नादंडो. K3.5 V1 B D (except D1.4.7) T G1.2.4 M2 राज्ञो; K4 राज्ञा (for राज्ञां). — d) K1-3 V1 B (except B5) Dn D1.4 T2 स्वधर्मेण; D5 सधर्मेव; D6 सधर्मे स; D8 सधर्मेण; G4 सधर्मो न (for स्वधर्मे न). K4 M2 (before corr.) यस्य धर्मेण (M2 यस्य धर्मो न) तिष्ठति; D7 स्वधर्मे न तु तिष्ठति.

C. 12. 4467
B. 12. 121. 59
K. 12. 121. 56

तस्मादिदमवोचाम व्यवहारनिदर्शनम् ॥ ५६
माता पिता च भ्राता च भार्या चाथ पुरोहितः ।
नादण्ड्यो विद्यते राज्ञां यः स्वधर्मे न तिष्ठति ॥ ५७

इति श्रीमहाभारते शान्तिपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## १२२

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान्वसुहोम इति श्रुतः ॥ १
स राजा धर्मनित्यः सन्सह पत्न्या महातपाः ।
मुञ्जपृष्ठं जगामाथ देवर्षिगणपूजितम् ॥ २
तत्र शृङ्गे हिमवतो मेरौ कनकपर्वते ।
यत्र मुञ्जवटे रामो जटाहरणमादिशत् ॥ ३
तदाप्रभृति राजेन्द्र ऋषिभिः संशितव्रतैः ।
मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ॥ ४
स तत्र बहुभिर्युक्तः सदा श्रुतिमयैर्गुणैः ।

---

Colophon: $G_3$ missing. — *Sub-parvan:* $Ś_1$ K $V_1$ B Da Dn $D_{1-7}$ T $G_{1.2.4}$ M राजधर्म. — *Adhy. name:* $Ś_1$ $K_{1.2}$ $D_1$ $M_{1-8}$ दंडोत्पत्तिः; $K_3$ $D_4$ दंडवृत्तिः; $V_1$ B $Da_1$ दंडप्रजागरोत्पात्तिः; $Da_2$ प्रजागरोत्पात्तिः; $T_1$ $G_{2.4}$ दंडलक्षणं. — *Adhy. no.* (figures, words or both): $B_{3-5}$ $Dn_1$ 120; $Da_1$ 122; $Dn_2$ 121 (as in text); $D_7$ $T_2$ $G_{1.2}$ M 123; $D_8$ 119; $T_1$ $G_4$ 124. — *Śloka no.:* Da Dn 60.

### 122

☞ $G_3$ is missing for this adhy. (cf. v. l. 12. 112. 1).

1 Before the ref., $G_1$ ins. वसुहोममांधातृसंवादः on marg. $D_8$ om. the ref. — $^{a}$) $T_1$ om. from प्युदा up to पुरा (in $1^b$). — $^{c}$) $K_4$ राज्य- (for राजा). $M_4$ द्युतिमान्राजा (by transp.). $K_4$ $B_1$ मतिमान्; $D_2$ द्युतिमद् (for °मान्). — $^{d}$) $D_7$ वसुहोत्र (for °होम). $K_1$ श्रुतिः; $B_2$ $D_{4.7}$ $T_2$ $M_4$ स्मृतः (for श्रुतः).

2 $^{a}$) $V_1$ $B_{0.4.5}$ $D_{2.3.6}$ $T_1$ $G_4$ राज- (for राजा). $K_{3.5}$ $V_1$ B Da Dn $D_{2.3.5.6.8}$ धर्मवि($K_5$ Da °वा-; $B_1$ °कृ)श्रित्यं (for °नित्यः सन्). $T_2$ $G_1$ स च राजा धर्मनित्यः. — $^{b}$) $B_2$ सहभार्यो (for सह पत्न्या). $D_7$ S ($G_3$ missing) सहदेव्या महायशाः. — $^{c}$) $G_1$ मुंजं पृष्ठं. $G_2$ जगाम हिमवत्पृष्ठं. — $^{d}$) $K_3$ om. from वर्षि up to दिशत् (in $3^d$). $D_8$ -पूजितैः; $T_2$ $G_{1.2}$ M -सेवितं (for -पूजितम्). $K_2$ Dn पितृदेवर्षिपूजितं.

3 $K_3$ om. 3 (cf. v. l. 2). — $^{a}$) $B_{1.2}$ अत्र; Cv यत्र (for तत्र). $K_1$ शृंग-; Da गंगे (for शृङ्गे). $D_1$ हि वसतो; $D_4$ हैमवति (for हिमवतो). — $^{b}$) $K_2$ मेघो; $K_4$ $B_{1.2}$ $D_{4.8}$ मेरोः; $D_1$ नरो (for मेरौ). $D_7$ S ($G_3$ missing) वसतिं समुपागमत्. ❀ Cv: हिमवत्पर्वतेऽपि एकं मेरोः शृङ्गमानीतमस्तीति भावेनाह यत्रेति । ❀ — $^{c}$) $B_1$ $M_2$ तत्र; $G_2$ अत्र (for यत्र). $Ś_1$ मुंजवने; $K_1$ $D_4$ °वतो; $K_{2.4}$ $D_1$ °वता; $K_5$ Dn $D_{2.3.5.6.8}$ मुंजावटे (for मुञ्ज°). Da वासो (for रामो). — $^{d}$) $D_{4.7}$ जटाधरणम्; $T_1$ $G_4$ $M_2$ °भरणम् (for °हरणम्). $Ś_1$ $K_{1.4}$ $D_{1.6}$ $G_1$ (orig).$_2$ आविशत् (for आदिशत्).

4 $^{a}$) $D_7$ S ($G_3$ missing) तदादि च महाप्राज्ञैर् ($D_7$ $T_1$ $G_4$ $^b$प्राज्ञो). — $^{b}$) M मुनिभिः (for ऋषिभिः). $K_3$ Da $D_4$ शंसितव्रतैः (for संशि°). — $^{c}$) $V_1$ $B_1$ Da मुंजपृष्ठम्; $D_7$ मुंजीवट (for मुञ्जपृष्ठ). $V_1$ प्रोक्तं; $D_7$ ख्यातः (for प्रोक्तः).

5 $^{a}$) $M_4$ युक्तं. — $^{b}$) $K_{2.3.5}$ $V_1$ B D (except $D_1$) S ($G_3$ missing) तदा (for सदा). $K_5$ $V_1$ B Da $D_{2.3.5.6}$ श्रुतमयैर्; $G_1$ श्रित°. $D_7$ गणैः (for गुणैः). — $^{c}$) $K_5$ Da $D_{1.2.3}$ (by corr.).$_{5.6}$ अनुगतो; $T_2$ $G_2$ °ज्ञातो (for °मतो). — $^{d}$) $T_2$ $G_1$ ब्रह्मर्षि- (for देवर्षि-). $B_1$ Da $D_6$ $G_1$ भवेत् (for ऽभवत्).

ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥ ५
तं कदाचिददीनात्मा सखा शक्रस्य मानितः ।
अभ्यागच्छन्महीपालो मान्धाता शत्रुकर्शनः ॥ ६
सोऽभिसृत्य तु मान्धाता वसुहोमं नराधिपम् ।
दृष्ट्वा प्रकृष्टं तपसा विनयेनाभ्यतिष्ठत ॥ ७
वसुहोमोऽपि राज्ञो वै गामर्घ्यं च न्यवेदयत् ।
अष्टाङ्गस्य च राज्यस्य पप्रच्छ कुशलं तदा ॥ ८
सद्भिराचरितं पूर्वं यथावदनुयायिनम् ।
अपृच्छद्वसुहोमस्तं राजन्किं करवाणि ते ॥ ९
सोऽब्रवीत्परमप्रीतो मान्धाता राजसत्तमम् ।
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ॥ १०
बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया ।
तथैवौशनसं शास्त्रं विज्ञातं ते नराधिप ॥ ११
तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम् ।
किं वापि पूर्वं जागर्ति किं वा परममुच्यते ॥ १२
कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः ।

C. 12. 4481
S. 12. 122. 13
K. 12. 122. 13

---

6 a) D1 ते (for तं). K5 तं चैव नियतात्मासौ. — b) Ś1 D1 तदा; K1 सदा (for सखा). K3 B1 Dn D1.2.4 मानिता; G1 M4 मानिनः (for मानितः). — D2 om. $6^{c}$–$7^{d}$. — c) K1–3.5 V1 B Da Dn D3–8 T G1.2.4 M2.4 अभ्यगाच्छन्. — d) D6 मांधाताः. Ś1 K1.2.4 V1 B1–4 D1.5 शत्रुकर्षणः; T2 शल्यकर्शनः (for शत्रु°).

7 D2 om. 7 (cf. v. l. 6). — a) K1.3.5 V1 B D (except D1; D2 om.) S (G3 missing) [उ]पसृत्य (Da °स्पृश्य; T1 G4 °स्मृत्य) (for ऽभिसृत्य). — b) D7 T2 G1 वसुभौमं (for °होमं). — c) K2.3 V1 B4 Da Dn D4 G2 M1–3 प्रकृष्ट-; K5 Bo.5 D3.5.8 प्रहृष्टं; B1.2.5 (marg.) D6 प्रहृष्ट- (for प्रकृष्टं). K2.3 V1 B1.2.4.5 (marg.) Da Dn D3.5.7 T1 G4 -तपसं; G1 (before corr.) तमसा; M1.3 -वयसं; M2 -पयसं (for तपसा). — d) Dn विनतोग्रे (for विनयेन). K1 [अ]त्यतिष्ठत; D7 T G1.4 M [उ]पतिष्ठते; G2 [उ]पदृश्यते (for [अ]भ्यतिष्ठत).

8 K5 om. 8–9. — a) K1 वसुहोमा; D7 T2 G1 °भौमो (for °होमो). Da1 ह (for ऽपि). D2 राजो वै; D4 राज्ञेसौ; D7 T G1.2.4 M2.4 वै राज्ञो (by transp.); M1.3 वै राज्ञे. — b) Dn पाद्यमर्घ्यं (for गामर्घ्यं च). V1 [अ]नुवेदयत्; B1 निवेद°; Da M [अ]न्ववेद°. — c) K2 Dn D7 T G1.2.4 M सप्तांगस्य (for अष्टां°). K1.2 V1 B Da Dn D2.3.5.6.8 G2 तु (for च). — d) K3 V1 B Da Dn D2–7 S (G3 missing) कुशलान्वये (K3 B2 °यं; D7 S [G3 missing] °यौ); D8 कुलशान्वये (for कुशलं तदा).

9 Ś1 K1.2 D1 om. $9^{a}$–$11^{b}$. K5 om. 9 (cf. v. l. 8). — a) D6 पूर्वें; M4 धर्मं (for पूर्वं). — b) K4 D4.8 अनुपायिनं (sic). — c) K3 D4 पप्रच्छ; D7 S (G3 missing) अब्रवीद् (for अपृच्छद्). T2 G1 वसुभौमस; M4 अनुहोमस (for वसु°).

10 Ś1 K1.2 D1 om. 10 (cf. v. l. 9). — a) D6 परमं प्रीतो. — b) K3.4 Dn2 G2 M2 राजसत्तम; K5 V1 B Da Dn1 D3–8 T G1.4 M1.3.4 °मः; D2 °माः (for °मम्). — c) D7 T2 G1 वसुभौमं (for °होमं). — d) K4 D4.6 G2 कुरुनंदनः (D4 °नं).

11 Ś1 K1.2 D1 om. $11^{ab}$ (cf. v. l. 9). Before 11, K4.5 Bo.2–5 Da Dn D2.3.5.6 ins. मांधातोवाच. — a) K3 बृहस्पति-. — b) D7 च यत् (for त्वया). — c) Ś1 B1.4.5 Da Dn1 तथैवोशनसं; D1 °वाशतसं (sic); D8 °वोसनशं (sic). — d) D6 विज्ञानं ते; D7 कथितं ते; T1 G4 विदितं ते; G1 विदितांतं (for विज्ञातं ते). K1.3.5 V1 B Da Dn D2–6.8 नरोत्तम; D7 S (G3 missing) नरेश्वर (for नराधिप).

12 a) K1 एवं (for अहं). K1.4.5 V1 B (except B5) Dn2 D2.3.5.6.8 ज्ञातुम् (for श्रोतुम्). — b) K5 दंडेति (for दण्ड). — c) K2.4 चापि; K3.5 B Da Dn D2–6.8 चास्य; V1 D7 S (G3 missing) वास्य (for वापि). Ś1 K1.2.4 सर्वं (for पूर्वं). D1 corrupt. — d) Ś1 K2.4 [अ]पि परम्; K5 V1 Bo.4.5 D2.3.5.6.8 परम; M1.3.4 चरमम् (for परमम्). D1 किं वापि परमुच्यते.

13 a) K1 कार्य- (for कथं). Da -संस्थानं (Da2 °ने); D1.7 M2 -संस्थं च; D6 -संस्था च (for -संस्थश्च). — c) V1 प्रब्रूहि (for ब्रूहि मे). B1 त्वं; D2.3.5.6.8 [ऽ]द्य (for सु-). K2 D4 सुमहाप्रज्ञ (D4 °प्राज्ञा); D1 सुमह्यप्राज्ञा (sic); D7 S (G3 missing) तद्यथातत्त्वं (for सुमहाप्राज्ञ). — d) T2 M2.4 दद्याम्; G1 M1.3 दद्याद् (for ददामि). D2.6.8 आचार्यचेतनं (D8 °नां).

14 D8 om. the ref. Da वासुदेव उवाच; D2

C. 12. 4481
B. 12. 122. 13
K. 12. 122. 13

ब्रूहि मे सुमहाप्राज्ञ ददाम्याचार्यवेतनम् ॥ १३

वसुहोम उवाच ।

शृणु राजन्यथा दण्डः संभूतो लोकसंग्रहः ।
प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः ॥ १४
ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः ।
ऋत्विजं नात्मना तुल्यं ददर्शेति हि नः श्रुतम् ॥ १५
स गर्भं शिरसा देवो वर्षपूगानधारयत् ।
पूर्णे वर्षसहस्रे तु स गर्भः क्षुवतोऽपतत् ॥ १६
स क्षुपो नाम संभूतः प्रजापतिररिंदम ।
ऋत्विगासीत्तदा राजन्यज्ञे तस्य महात्मनः ॥ १७
तस्मिन्प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ ।
हृष्टरूपप्रचारत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ॥ १८
तस्मिन्नन्तर्हिते चाथ प्रजानां संकरोऽभवत् ।
नैव कार्यं न चाकार्यं भोज्याभोज्यं न विद्यते ॥ १९
पेयापेयं कुतः सिद्धिर्हिंसन्ति च परस्परम् ।
गम्यागम्यं तदा नासीत्परस्वं स्वं च वै समम् ॥ २०
परस्परं विलुम्पन्ते सारमेया इवामिषम् ।
अबलं बलिनो जघ्नुर्निर्मर्यादमवर्तत ॥ २१
ततः पितामहो विष्णुं भगवन्तं सनातनम् ।
संपूज्य वरदं देवं महादेवमथाब्रवीत् ॥ २२

---

वासुहोम उ° ; $D_7$ $T_2$ $G_1$ वसुभौमः (for वसुहोम उवाच). — $^{b}$) $T_2$ संघातो (for संभूतो). $B_5$ लोकविग्रहः (for °संग्रहः). — $^{c}$) $D_7$ $T_2$ प्रज्ञा- (for प्रजा-). $D_4$ -विनाश- (for -विनय-). — $^{d}$) $K_4$ $D_1$ दंडस्य (for धर्मस्य). $M_4$ सनातनं.

15 $^{a}$) $K_1$ यियुक्षुर् ; $D_1$ *यक्षुं (for यियक्षुर्). — $^{c}$) $D_7$ T $G_{1.2.4}$ ऋत्विजो. $K_{2.4.5}$ Dn $D_{1.4.7}$ S ($G_3$ missing) नात्मनस् (for नात्मना). $D_4$ तुल्या ; $D_7$ T $G_{1.2.4}$ तुल्यान् ($G_1$ °ल्यां). — $^{d}$) $D_7$ $T_2$ ददृशे ह ; $T_1$ $G_{1.4}$ $M_{1.3.4}$ ददर्शेह (for ददर्शेति). $K_1$ lacuna ; $D_1$ $G_2$ ह ; $D_7$ T $G_{1.4}$ $M_{1.3.4}$ [इ]ति (for हि). $D_7$ शत्रुहन् (for नः श्रुतम्).

16 $^{a}$) $K_1$ गर्भां ; $D_1$ गर्थ्यं (for गर्भं). $D_7$ S ($G_3$ missing) भगवान् (for शिरसा). — $^{b}$) Dn बहुवर्षाणि ; $D_1$ वेयपूगान् ; $D_{3.5}$ वर्षपूगानि ; $D_7$ वर्गपूगान् ; $T_2$ $G_1$ वर्षपूगेन (for °गान्). $K_3$ $B_1$ $D_4$ अधारयेत् ; $D_8$ °यन्. — $^{c}$) $D_4$ ins. अथ before पूर्णे. $K_3$ $V_1$ $B_{1.2}$ Da $D_7$ S ($G_3$ missing) अथ पूर्णे; $D_6$ पूर्णं वर्ष- (for पूर्णे वर्ष-). $K_1$ [s]थ (for तु). — $^{d}$) $K_1$ क्षुवयो ; $B_1$ क्षुभितो ; $D_4$ क्षवतो ; $G_1$ $M_1$ क्षुपतो ; $M_{3.4}$ क्षुत्पतो (sic) (for क्षुवतो). $M_3$ पतन्.

17 $V_1$ reads $17^{a}$–$19^{b}$ on marg. — $^{a}$) $D_4$ $T_1$ $G_4$ $M_{3.4}$ क्षुवो ; $D_7$ $T_2$ $G_1$ क्षुवान् (for क्षुपो). — $^{b}$) $K_{1.3}$ $V_1$ $B_1$ Da $D_{4.6.7}$ T $G_{1.2.4}$ $M_{2.4}$ अरिंदमः. — $^{c}$) $K_{2.3}$ $D_{1.4}$ तदा राज- ; $B_3$ Dn $D_7$ $T_1$ $G_{2.4}$ M महाराज ; $T_2$ $G_1$ महातेजा (for तदा राजन्). — $^{d}$) $V_1$ तस्य यज्ञे (by transp.); Bo यज्ञे यस्य.

18 $V_1$ reads 18 on marg. — $^{b}$) $D_1$ ब्राह्मणः. Da $M_4$ पार्थिवर्षभः ; $D_4$ पुरुषर्षभ (for पार्थिव°). — $^{c}$) $K_{2.3.5}$ $V_1$ $B_{0-3.5}$ Da Dn $D_{1-3.5.6.8}$ दृष्टरूप- ; $B_4$ अष्ट° ; $D_4$ हृष्टरूपः ; $D_7$ $T_1$ $G_{1.4}$ $M_{1.3}$ इष्टरूप- ; $T_2$ शील° ; $M_2$ इष्टं रूपं ; $M_4$ इष्टभूप- (for हृष्टरूप-). $K_5$ $V_1$ $B_3$ Dn $D_{2.3.5.6.8}$ $M_2$ -प्रधानत्वात्. — $^{d}$) $D_1$ संतर्हितो ; $D_{2.4}$ सांतर्हितो (for सोऽन्त°). $D_1$ भवेत्.

19 $V_1$ reads $19^{ab}$ on marg. — $^{a}$) $K_{2.3.5}$ $V_1$ B Da $Dn_1$ $D_{2.3.5-8}$ S ($G_3$ missing) चापि ; $Dn_2$ $D_4$ वापि (for चाथ). — $^{b}$) $B_1$ शंकरो (for सं°). — $^{c}$) Bo नैक- (for नैव). $B_{1.2}$ Dn $D_{4.7}$ $G_{1.2}$ वा (for च). $D_6$ नैव कार्येषु न त्वाकार्यं (hypermetric). — $^{d}$) $D_1$ भोज्यभाज्यं ; $D_4$ भाज्याभोज्यं. M च (for न). Da वर्तते (for विद्यते).

20 $^{a}$) $K_{3.5}$ $V_1$ B $Dn_2$ $D_{2.3.5.8}$ पेयापेये ; $D_1$ पापे पेयं ; $D_6$ ये पापे ये ; $D_7$ पेयापेयः. $Dn_1$ सद्भिर् (for सिद्धिर्). Da ये तु पापास्ततः क्रूराः. — $^{c}$) $T_2$ तथा (for तदा). $K_1$ वासन् (for नासीत्). — $^{d}$) $B_4$ $M_2$ परस्व- ; Dn $D_{3.5}$ स्वं पर- (for परस्वं). $M_2$ स्वबलैः (for स्वं च वै).

21 $^{a}$) $K_{3.5}$ $V_1$ B Da $Dn_2$ $D_{2-6.8}$ विलुंपंति ; $D_1$ विलंपंते. — $^{b}$) $D_4$ सारमेयाम् ; $G_1$ °मेव (for °मेया). Dn यथा (for इव). — $^{c}$) $K_{3.5}$ $V_1$ B D (except $D_{1.4}$) S ($G_3$ missing) अबलान्. $K_3$ $V_1$ $B_{1.2}$ Da Dn घ्नंति ; $D_1$ $M_2$ जघ्नन् (for जघ्नुर्). — $^{d}$) $T_2$ $G_1$ प्रवर्तते (for अवर्तत).

22 $^{a}$) $Ś_1$ $K_1$ विष्णुर् ; Cv विष्णुं (as in text). — $D_7$ om. $22^{cd}$. — $^{c}$) $D_1$ वरदे. $V_1$ $B_{1.2}$ देवो.

अत्र साध्वनुकम्पां वै कर्तुमर्हसि केवलम् ।
संकरो न भवेदत्र यथा वै तद्विधीयताम् ॥ २३
ततः स भगवान्ध्यात्वा चिरं शूलजटाधरः ।
आत्मानमात्मना दण्डमसृजद्देवसत्तमः ॥ २४
तस्माच्च धर्मचरणां नीतिं देवीं सरस्वतीम् ।
असृजद्दण्डनीतिः सा त्रिषु लोकेषु विश्रुता ॥ २५
भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः ।
तस्य तस्य निकायस्य चकारैकैकमीश्वरम् ॥ २६
देवानामीश्वरं चक्रे देवं दशशतेक्षणम् ।
यमं वैवस्वतं चापि पितॄणामकरोत्पतिम् ॥ २७
धनानां रक्षसां चापि कुबेरमपि चेश्वरम् ।
पर्वतानां पतिं मेरुं सरितां च महोदधिम् ॥ २८

C. 12. 4496
B. 12. 122. 28
K. 12. 122. 54

23 $^{a}$) T1 G2.4 तत्र (for अत्र). K3 Dn D1 त्वम्; G1 एव (for साधु). K4 नु कंपां; D1 [अ]नुकंपो; M2 [आ]नुकंपां. D7 च (for वै). — $^{b}$) K1 D4 केवलां; K5 V1 Bo. 1. 3–5 Da Dn D2. 3. 5. 6. 8 केशव; D7 S (G3 missing) शंकर (for केवलम्). — After 23$^{ab}$, D7 S (G3 missing) Cv ins.:

279* अयं विष्णुः सखा तुभ्यं धर्मस्य परिरक्षणे ।
त्वं हि सर्वविधानज्ञः सत्त्वानां त्वं गतिः परा ।

[(L. 1) Cv कृतो (for तुभ्यं). — (L. 2) T1 G4 स (for त्वं). D7 M1. 3. 4 सर्वविधानज्ञ. D7 सतां च; M2 सखीनां (for सत्त्वानां). T G1 च (for त्वं).]

— $^{c}$) Da1 lacuna; Da2 D7 T G1. 2. 4 M4 तत्र (for अत्र). — $^{d}$) V1 Da D4 तथा (for यथा). K V1 B1 Dn D4. 7 S (G3 missing) तद्वै (by transp.); Bo. 2–5 Da D2. 3. 5. 6. 8 तन्मे.

24 $^{a}$) K3 D4 च (for स). — $^{b}$) D7 T1 G1. 2. 4 M तदा; T2 ततः (for चिरं). G2 शूलं. K1. 3 V1 B D (except D1) S (G3 missing) Cv -व(Bo °ध)-रायुधः (D4 °धं); K4 -जंगधरः (for -जटाधरः). K5 चिरं भूत्वा च सुस्थिरः. ❀ Cv: शूलाद्वरं श्रेष्ठं चक्रमायुधं यस्य । अन्यथा प्रक्रमविरोधः । शूलवरायुधः शिवान्तर्यामी विष्णुरेवेति ज्ञेयम् । ❀ — After 24$^{ab}$, D7 S (G3 missing) Cv ins.:

280* देवदेवो महादेवः कारणं जगतः परम् ।
ब्रह्मविष्ण्विन्द्रसहितः सर्वैश्च स सुरासुरैः ।
लोकसंधारणार्थं च लोकसंकरनाशनम् ।

[(L. 2) T2 G1. 2 सर्वैश्चैव सुरासुरैः (for the post. half). — (L. 3) G2 -नंदनः; M2 -नाशनः (for -नाशनम्).]

— For the repetition of 24$^{cd}$ in Ś1 K1, cf. v.l. 26. — $^{c}$) D2 आत्मनां (for °ना). K5 आत्मना दंडम-सृजद्. — $^{d}$) K2. 3 D1. 7. 8 सोसृजद्; B1 अभवद्; Dn1 ससृजे (for असृजद्). K4 G2 M2 देवसत्तम. K5 देवदेवो जनार्दनः.

25 B3 is not collated for 25. — $^{a}$) K3 स; D4 तु (for च). K2. 5 V1 Bo–2. 4. 5 Da Dn D2. 3. 5. 6 S (G3 missing) धर्मचरणान्; K3 °चराणां; K4 D8 °चरणा; D1 °चाराणां; D4 °चरणं; D7 °चरणाद् (for °चरणां). — $^{b}$) K3. 4 नीति-; K5 Da2 Dn D2–6. 8 नीतिर्; B4 नीतं; D7 इति (for नीतिं). Ś1 K1. 4. 5 Da2 Dn D2–6. 8 देवी-. K5 Dn D2. 3. 5. 6. 8 -सरस्वती. — $^{c}$) K2–5 V1 Bo–2. 4. 5 Da Dn D2. 3. 5. 6. 8 ससृजे (for असृजद्). K2. 3. 5 V1 Bo. 1. 4. 5 D (except D1. 4) S (G3 missing) दंडनीतिं. K5 तां; Da स; D1 मा; D4 स्यात्; S (G3 missing) वै (for सा). — $^{d}$) K2. 5 V1 Bo. 5 Da Dn D7. 8 S (G3 missing) विश्रुतां; B1 °ताः (for °ता). — After 25, D7 S (G3 missing) ins. a passage given in App. I (No. 13).

26 $^{b}$) Ś1 (also as in text) -जटाधरः; D4 -धरा-युधं (for -वरायुधः). — After 26$^{ab}$, Ś1 K1 repeat 24$^{cd}$; V1 reads 26$^{c}$–27$^{b}$ on marg.

27 V1 reads 27$^{ab}$ on marg. — $^{a}$) D4 देवताम् (for देवानाम्). Da1 ईश्वरे चक्रे. — $^{b}$) D4. 7 देवदेवं (for देवं दश-). D2 -शतैक्षणं. — $^{c}$) D1 यम-. Da विवस्वतं. D2 वापि; D4. 7 M4 चैव (for चापि). — $^{d}$) K1. 3. 5 Bo. 1. 3–5 Dn D2. 3. 5. 6. 8 M प्रभुं; V1 B2 Da प्रभुः; D4 विभुः (for पतिम्). — After 27, D7 S (G3 missing) read 29$^{ab}$.

28 $^{a}$) K5 यक्षानां (for धनानां). Ś1 D1 रक्षमाणं च; K1 °माणानां; K2 °माणे च; K4 °सानां च; K5 V1 B Da Dn D2. 3. 5. 6. 8 राक्षसानां च; D7 S (G3 missing) रक्षसां चैव (for °सां चापि). — $^{b}$) V1 Bo. 2–5 Da D3. 5. 6. 8 अथ; B1 lacuna (for अपि). — $^{c}$) D1 मेदं (for मेरुं).

29 D7 S (G3 missing) read 29$^{ab}$ after 27. — $^{a}$) D4 राज्य-; D7 T1 G1. 4 तथा (for राज्ये). D1 [s]मराणां (for सु°). — $^{b}$) D4 विदधद् (for विदधे).

C. 12. 4497
B. 12. 122. 29
K. 12. 122. 53

अपां राज्ये सुराणां च विदधे वरुणं प्रभुम् ।
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् ॥ २९

रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः ।
महात्मानं महादेवं विशालाक्षं सनातनम् ॥ ३०

वसिष्ठमीशं विप्राणां वसूनां जातवेदसम् ।
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ॥ ३१

वीरुधामंशुमन्तं च भूतानां च प्रभुं वरम् ।
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥ ३२

कालं सर्वेशमकरोत्संहारविनयात्मकम् ।
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥ ३३

ईश्वरः सर्वदेहस्तु राजराजो धनाधिपः ।
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥ ३४

तमेकं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ ।
प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥ ३५

महादेवस्ततस्तस्मिन्वृत्ते यज्ञे यथाविधि ।
दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥ ३६

— [c]) $D_4$ मृत्युः (for मृत्युं). — [d]) $K_1$ तै**नां; $D_1$ तेजसं च; $D_4$ °सानां; $D_6$ °साथ (for °सां च).

30 [a]) Da अथ (for अपि). Da $D_{4.6}$ चेशानां ($D_4$ °न); $T_2$ $G_1$ गोप्तारम् (for चेशानं). — [b]) $T_2$ $G_1$ ईशानं ($G_1$ °नां) (for गोप्तारं). $D_{4.6}$ विदधत्. $K_{2.3.5}$ $V_1$ B D (except $Da_1$ $D_{1.7}$) $T_2$ $G_2$ $M_2$ प्रभुं (for प्रभुः). — $K_5$ om. 30[c]–31[d]. — [cd]) $G_2$ विशालाक्षं महादेवं (by transp.). — After 30, $D_7$ S ($G_3$ missing) ins.:

281* दश चैकं च ये रुद्रास्तस्यैते मूर्तिसंभवाः ।
नानारूपधरो देवः स एव भगवाञ्शिवः ।

[(L. 1) $T_1$ $M_{1.3}$ चैकश (for चैकं). $G_1$ ते (for ये).]

31 $K_5$ om. 31 (cf. v. l. 30). — [a]) $B_1$ $T_1$ वशिष्ठम्; $Da_1$ $D_4$ विशिष्ठम् (for वसिष्ठम्). — [b]) $D_8$ om. from वसूनां up to वरुणो (in 43[a]). — [c]) $D_4$ वापि (for चक्रे). $M_{1.3.4}$ तेजस्विनां भास्करं च.

32 $D_8$ om. 32 (cf. v. l. 31). — [a]) Da विरुद्धा-विं($Da_2$ °वं)शुमंतं च (sic); $D_1$ विदथासंशुमंतं च (sic); $D_7$ S ($G_3$ missing) वीरुधां वसु($G_2$ °धानां सु)-मंतं च. — [b]) $B_3$ $T_1$ $G_4$ प्रभुं परं; $Dn_2$ प्रभुर्वरं; $D_4$ शुभं प्रभुं; $G_1$ परं प्रभुं (for प्रभुं वरम्). — [d]) $T_2$ स्कंधं. $K_3$ आदिशेत्; $M_2$ आविशत्; $M_4$ आदिशं (for °शत्). $D_4$ स्कंदं राजा समादिशत्.

33 $D_8$ om. 33 (cf. v. l. 31). — [a]) $D_1$ काले. $K_1$ $D_1$ सर्वेषाम् (for सर्वेशम्). — [b]) $D_4$ संहारं. $M_2$ -विनयात्मकः. ❀ Cn: विनयो विवृद्धिः । ❀ — $K_5$ om. 33[cd]. — [c]) $K_1$ $T_2$ मृत्युश्च. $Da_1$ -विभागश्च. $K_4$ $D_1$ मृत्योश्च ($D_1$ °श्च-) दुर्विभागस्य. ❀ Cn: चत्वारो विभागाः । शस्त्रं शत्रुर्यमः कर्म च, रोगो रागो यमः कर्म चेति वा । ❀

34 $D_8$ om. 34 (cf. v. l. 31). — [a]) $K_{2.3}$ $V_1$ B Da Dn $D_{2-6}$ सर्वदेवस्तु; $K_5$ सर्वभूतानां; $D_7$ S ($G_3$ missing) देवदेवस्तु (for सर्वदेहस्तु). — [b]) $M_4$ राजा राजो. $K_3$ $T_1$ $G_4$ धनेश्वरः; $K_5$ $B_{2-5}$ Da $D_6$ नरा-धिपः; $B_1$ Dn $D_{2.3.5.7}$ नराधिप; $D_4$ महेश्वरः (for धनाधिपः). — [d]) $K_4$ $Da_1$ श्रुतः (for श्रुतिः). — After 34, $D_7$ S ($G_3$ missing) ins.:

282* ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः ।
विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ।
ज्ञानात्मकः शिवो ह्यत्र एतेषामपि कारणम् ।
सृजते ग्रसते चैव तमोभूतमिदं यथा ।
अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वरः । [5]

[(L. 2) $T_2$ $G_1$ सहान्वयाः; $M_{1.3.4}$ च ये नराः; $M_2$ च सान्वयः. — T $G_{1.2.4}$ $M_2$ om. line 3. — (L. 4) $T_1$ $G_3$ चैतत् (for चैव). $T_2$ $G_{1.2}$ $M_2$ तमोभृतम् (for °भूतम्). — (L. 5) $T_1$ $G_4$ अज्ञातं च (for अप्रज्ञातं). $D_7$ यदा (for तदा).]

35 $D_8$ om. 35 (cf. v. l. 31). — [a]) $K_{2.3.5}$ $V_1$ $B_{1-4}$ Da Dn $D_{2.3.5}$ Cv एनं; Bo एवं; $B_5$ $D_{6.7}$ S ($G_3$ missing) एव (for एकं). $G_4$ ब्राह्मणः. — [b]) $Dn_2$ $D_6$ अनुज्ञातं; $D_7$ °जानः; T $G_{2.4}$ M °जानन्; $G_1$ °जातः (for °जातं). $D_1$ क्षुतं; $D_7$ $T_1$ $G_{1.4}$ $M_4$ क्षुवं (for क्षुपं). Da दधे; $G_2$ दधौ (for ददौ). — [c]) $D_1$ प्रजानमधिपश्रेष्ठं. — [d]) $D_1$ -कर्मभृताम्; $G_2$ -धर्मवताम् (for °भृताम्).

36 $D_8$ om. 36 (cf. v. l. 31). — [b]) $B_5$ देशे (for यज्ञे). $D_1$ यथा विधिः; $D_7$ $T_2$ $G_1$ सनातनं ($D_7$ °नः);

विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः ।
प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ॥ ३७
भृगुर्ददावृषिभ्यस्तु तं दण्डं धर्मसंहितम् ।
ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ॥ ३८
क्षुपस्तु मनवे प्रादादादित्यतनयाय च ।
पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ।
तं ददौ सूर्यपुत्रस्तु मनुर्वै रक्षणात्मकम् ॥ ३९
विभज्य दण्डः कर्तव्यो धर्मेण न यदृच्छया ।
दुर्वाचा निग्रहो बन्धो हिरण्यं बाह्यतःक्रिया ॥ ४०

व्यङ्गत्वं च शरीरस्य वधो वा नाल्पकारणात् ।
शरीरपीडास्तास्तास्तु देहत्यागो विवासनम् ॥ ४१
आनुपूर्व्या च दण्डोऽसौ प्रजा जागर्ति पालयन् ।
इन्द्रो जागर्ति भगवानिन्द्रादग्निर्विभावसुः ॥ ४२
अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः ।
प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ॥ ४३
धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः ।
व्यवसायात्ततस्तेजो जागर्ति परिपालयन् ॥ ४४
ओषध्यस्तेजसस्तस्मादोषधिभ्यश्च पर्वताः ।

C. 12. 4513
B. 12. 122. 45
K. 12. 122. 73

---

T1 G2.4 M समाहितः (for यथाविधि). — c) K1 दंड-. K3 om. from स्य up to मरीचिभ्यां (in $37^c$). — d) D7 T G2.4 M सत्कृतं विष्णवे (by transp.). B1 स तु तं (for सत्कृतं).

37 D8 om. 37 (cf. v. l. 31). K3 om. up to मरीचिभ्यां (cf. v. l. 36). — a) K1 अंगिरसं. — b) K1 अग्निरा; D1.7 अंगिरो (for अङ्गिरा). — c) D1 इंद्रं. K4 D4 -मरीच्या(K4 °चा)भ्यां.

38 D8 om. 38 (cf. v. l. 31). — a) D1 भृगुं. — b) K4 lacuna; D7 T1 G4 तद्- (for तं). T2 दंडं तं (by transp.). D4 -संहतं (for -संहितम्). Dn दंडं धर्मसमाहितं. — d) Ś1 D1 लोकपालः. D1.7 क्षयाय; T1 G1.4 क्षुवाय (for क्षुपाय). K5 B2.3.5 D2–7 S (G3 missing) तु (for च).

39 D8 om. 39 (cf. v. l. 31). — a) D1 क्षपस्; D7 T1 G1.4 क्षुवस् (for क्षुपस्). Bo दद्याद्; D1 प्राह (for प्रादाद्). — b) D1 दंडदित्य- (sic) (for आदित्य-). K1 ह; K5 Bo.3–5 Dn2 D2.3.5.6 वै; V1 हि; D4 सः; D7 T G1.4 तु (for च). — c) Ś1 प्रेतेभ्यः; K1 प्रेस्येत्यः; D7 पितृभ्यः (for पुत्रेभ्यः). D1 श्रद्धवेदैस्तु (sic). — d) K1 सूक्ष्मं. Da धर्मसूक्ष्मार्थदर्शनात्. — K4.5 V1 B Da Dn D2.3.5–7 S (G3 missing) read $39^{ef}$ after 41. — e) K4.5 V1 B Da D2.3.5–7 S (G3 missing) सूर्यपुत्राय (for °पुत्रस्तु). — f) K4.5 V1 B Da D2.3.5–7 S (G3 missing) मनवे (for मनुर्वै). K2.3 B4 Dn रक्षणार्थकं.

40 With 40, cf. B. 12. 166. 70. D8 om. 40 (cf. v. l. 31). — b) D7 T2 G1 दंडेन; T1 G2.4 दंडे तु (for धर्मेण). K1 [ए]व; Dn1 तु (for न). D7 S (G3 missing) नयमिच्छता (for न यदृच्छया). — c) K3 B1 Da D4 दुर्वचो; K4 दुर्वानि (sic); K5 B2–4 Dn D2.3.5.6 दुष्टानां (for दुर्वाचा). K4 Da निगृहो (for निग्रहो). K2.5 V1 B Da Dn D2.3.5–7 S (G3 missing) दंडो (for बन्धो). — d) Bo.5 Da D2.4.6.7 M2.4 -क्रियाः.

41 D8 om. 41 (cf. v. l. 31). $41^{ab}$ = (var.) B. 12. 166. $71^{ab}$. — a) D2 व्यामत्वं; M2 व्यंगतश् (for व्यङ्गत्वं). — b) K1 वा नान्यकारणात्; K3 D4 चानल्पकारणे; K5 B Da Dn D2.3.5.6 नाल्पस्य कारणात्; D1.7 T2 G1.2 M1.3.4 वानल्प°. — c) B1 तीक्ष्णाश्च; D7 T1 G1.2.4 M1–3 कार्या तु; M4 कर्तव्या (for तास्तास्तु). K2.3.5 V1 Bo.2–5 Da Dn D2–6 च (for तु). — d) Dn1 देहत्याग-; D7 T G1.2.4 स्वदेशाच्च; M1.3.4 देशाच्चापि; M2 देवाच्चापि (for देहत्यागो). K4 Da2 D6 निवासनं; Bo विनाशनं; Da1 corrupt; M4 विवाससं (for °सनम्). — After 41, K4.5 V1 B Da Dn D2.3.5–7 S (G3 missing) read $39^{ef}$.

42 D8 om. 42 (cf. v. l. 31). — a) K1 M1 आनुपूर्वाच्; K2.3.5 B1 Dn1 D3.5.7.8 T G1.2.4 M1.3.4 °पूर्व्याच्; K4 अनुपूर्व्या; D1 आनुपूर्वा; D8 अनुपूर्व्याच्. K3.5 V1 Bo.2.5 Da Dn [ऽ]यं (for ऽसौ). — b) K2.4 D1 पुरा (for प्रजा). — c) V1 B Da D2.3.5 बलवान् (for भगवान्).

43 D8 om. $43^a$ (cf. v. l. 31). — a) Da1 इंद्रेर् (for अग्नेर्). — b) K1 वरुणाश्; B2 वारुणाच्. — c) Da2 प्रजापत्ये; G1 °पतिस्. — d) D8 नियमात्मकः (for विनया°).

44 a) Ś1 K1.4 D1 धर्मश्च (for धर्माच्च). D1 ब्रह्मणा; D6 T1 ब्राह्मणः. — c) B2 D6 T2 G2 व्यवसा-

C. 12. 4514
B. 12. 122. 46
K. 12. 122. 74

पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ॥ ४५
जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतेरपि ।
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ॥ ४६
ब्रह्मा पितामहस्तस्माज्जागर्ति प्रभुरव्ययः ।
पितामहान्महादेवो जागर्ति भगवाञ्शिवः ॥ ४७
विश्वेदेवाः शिवाच्चापि विश्वेभ्यश्च तथर्षयः ।
ऋषिभ्यो भगवान्सोमः सोमाद्देवाः सनातनाः ॥ ४८
देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ।
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः ।
स्थावरं जङ्गमं चैव क्षत्रियेभ्यः सनातनम् ॥ ४९
प्रजा जाग्रति लोकेऽस्मिन्दण्डो जागर्ति तासु च ।
सर्वसंक्षेपको दण्डः पितामहसमः प्रभुः ॥ ५०
जागर्ति कालः पूर्वं च मध्ये चान्ते च भारत ।
ईश्वरः सर्वलोकस्य महादेवः प्रजापतिः ॥ ५१
देवदेवः शिवः शर्वो जागर्ति सततं प्रभुः ।
कपर्दी शंकरो रुद्रो भवः स्थाणुरुमापतिः ॥ ५२

---

यास. — d ) K1. 5 Dn2 D1. 4 T2 G2 M2 परिपालयत्.

45 D8 repeats 45 after 48ab. — b ) K2. 3 Dn D2. 7 T2 G1. 2. 4 M2 ओषधीभ्यश्; K4 D8 औषधि° (for ओषधि°). K5 D4 पर्वतः. — c ) B1 यथा तेभ्यश् (for पर्वतेभ्यश्). — d ) D2 om. from रसो up to प्रभु (in 47b). Ś1 K1. 3 V1 B0-4 Da Dn2 D3. 5. 6 रसगुणास्; K5 °गुणस्. D7 S (G3 missing) अपि (for तथा).

46 D2 om. 46 (cf. v. l. 45). — a ) K1 निर्वृतिर्; D1 निर्वृतिर् (for निर्ऋतिर्). Ś1 K4 D1 देवो (for देवी). — b ) K1 निर्वृतेर्; D1 निवृतेर् (for निर्ऋतेर्). D7 S (G3 missing) निर्ऋती(G1. 2 M2 °ति)मनु (for °तेरपि). — c ) D7 S (G3 missing) देवाः (for वेदाः). D7 T1 G4 प्रसूता (for प्रतिष्ठा). K1. 5 D4 G1 ज्योतिभ्यस्. — d ) Ś1 K1. 4 D1. 4 तथा (for ततो). K1 D1 हयशिरः; G1 भयशिराः (for हय°).

47 D2 om. up to प्रभु (cf. v. l. 45). — a ) T2 G1 प्रजापतिस् (for पितामहस्). — b ) Da प्रभुरीश्वरः (Da2 °र); D8 परिपालयन् (for प्रभुरव्ययः). — D8 om. (hapl.) 47c–48b. — c ) G2 पितामह- (for °महान्). T1 G2. 4 महातेजा (for °देवो).

48 D8 om. 48ab (cf. v. l. 47). — a ) M1 विश्वदेवाः. K3 om. (hapl.) from शिवाच्चापि up to सनातनाः (in 48d). K1. 4 Bo. 1. 2 (marg. as in text) शिवाश् (for शिवाच्). D7 वा (for च). — b ) K2. 4 D1 विश्वे देवास्; Da देवेभ्यश्च (for विश्वे°). K4 तथार्षयः; D1 corrupt; D4 महर्षयः (for तथ°). D7 S (G3 missing) विश्वेभ्य ऋषयस्ततः (T2 G1. 2 °था). — After 48ab, D8 repeats 45. — c ) Da ऋत्विग्भ्यो (for ऋषिभ्यो). D1 सर्वैः (for सोमः). — d ) Ś1 K1 D1 देवः; G1 देवात्. Ś1 K4 G1 सनातनः; D5 प्रजागिरे (for सनातनाः).

49 a ) D8 देवेभ्यो ब्राह्मणाल्लोके. — b ) K5 जायति; Da Dn2 D2. 8 जागर्ति (for जाग्रति). B1 Da अवधारय; D6 उपधारयः. — c ) D7 S (G3 missing) तु (for च). K1 राजन्यां; D6 राजन्य. — d ) G1 लोका. D2. 4. 8 M4 रक्षति; D8 रक्ष्यंति. M1. 3 सर्वतः (for धर्मतः). — f ) K3 D4 क्षत्रियस्य (for °येभ्यः). B1 T2 सनातनः.

50 a ) K4 om. (hapl.) from जाग्रति up to प्रभुः (in 50d). K1. 5 B1 Da D1. 4 G1 जागर्ति (for जाग्रति). — b ) G1 जाग्रंत (for जागर्ति). — c ) K1 D4 सर्व संक्षेपको दंडः; K2. 5 V1 Bo. 2–5 Dn D2. 3. 5. 6. 8 सर्व संक्षिप(Dn1 °प्य)ते दंडः; B1 Da M2 सर्वसंक्षेपतो दंडः. — d ) K2. 3 Bo. 3. 5 D6 -समप्रभुः; K5 V1 B1. 2. 4 Da Dn D2. 3. 5. 8 -समप्रभः; S (G3 missing) -सुतः प्रभुः. — After 50, T2 reads 52cd.

51 a ) K5 D1 काल-. G2 कालाच् (for पूर्वं). D4 तु (for च). — b ) B2 चान्ये (for चान्ते). Cv भारते (for °त). — c ) Bo. 3–5 D2. 3. 5. 6. 8 सर्वभूतस्य (for °लोकस्य). D7 S (G3 missing) ईशः सर्वस्य कालो हि (D7 लोकस्य).

52 a ) K2–5 B2. 3 Da Dn D1. 2. 6–8 सर्वो (for शर्वो). — b ) M2 सततः (for °तं). V1 शिवः (for प्रभुः). — T2 reads 52cd after 50. — c ) D4 भद्रो (for रुद्रो). — d ) K2 Dn शिवः (for भवः). D4 रमापतिः (for उमा°).

53 a ) D4 अत्र (for एष). K1. 2. 4 D4. 7 T1 G1. 2. 4 M व्याख्यात; D1 व्याख्याता; T2 आख्यातस् (for विख्यात). — b ) Ś1 आद्यो मध्ये; D7 S (G3 missing) तथौषध्यस्. K3–5 V1 Bo. 1. 3–5 Da Dn2 D2–8

इत्येष दण्डो विख्यात आदौ मध्ये तथावरे ।
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ॥ ५३
भीष्म उवाच ।
इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः ।
श्रुत्वा च सम्यग्वर्तेत स कामानाप्नुयान्नृपः ॥ ५४
इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ ।
नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ॥ ५५

इति श्रीमहाभारते शान्तिपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

# १२३

युधिष्ठिर उवाच ।
तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥ १
धर्मार्थकामाः किंमूलास्त्रयाणां प्रभवश्च कः ।

C. 12. 4556
B. 12. 123. 2
K. 12. 123. 2

---

S ( G3 missing ) तथापरे ( for °वरे ). — c ) Da भूमिपाला· — d ) D4 प्रवर्तेत ( hypermetric ); D8 वर्तिता ( for वर्तेत ). Da D1 वर्तेतानेव ( sic ).

54 D8 G1 om. the ref. — a ) Bo. 5 इत्येवं; D4 प्रतीदं ( for इतीदं ). D7 T2 G1 वसुभौमस्य ( for °होमस्य ). — b ) D7 S ( G3 missing ) योत्मवान् ( D7 यद्वधवान्; T1 G4 योक्तवान्; T2 यो विद्वान्; G1 यो वाभि- ) श्रृणुयान्मतं· — c ) T2 G1. 2 तु ( for च ). K2. 3 D6 श्रुत्वा सम्यक्प्रवर्तेत· — d ) D8 om. from कामा up to ख्यातं ( in 55a ). D7 S ( G3 missing ) लोकान् ( for कामान् ). B1. 2. 4. 5 D3. 5 प्राप्नुयान् ( for आप्नु° ). Ś1 K2. 4 D1. 4. 5 नरः; K1 न्रयः (sic); K5 V1 B1. 2. 4. 5 Da D7 M1–3 नृप ( for नृपः ). K3 Dn1 सर्वान्कामानवाप्नुयात्·

55 D8 om. up to ख्यातं ( cf. v. l. 54 ). — a ) Ś1 K1. 2 D1 दंडम् ( for सर्वम् ). B4 इति सर्वं समाख्यातं· — D8 reads 55b twice. — b ) D7 T2 G1 मनुजाधिप; M2 मनुजर्षभः· — c ) B5 नियतः ( for नियन्ता ). Da1 सर्वलोकश्च· — d ) K3 धर्मकामस्य; V1 B Da D2. 3. 5. 8 चक्रा( D8 °क्री )क्रांतस्य; D4 धर्मक्रांतस्य; G2 धर्मकांतस्य ( for धर्माक्रान्तस्य ). —After 55, D7 S ( G3 missing ) ins. :

283* वसुहोमाच्छ्रुतं राज्ञा मान्धात्रा भूभृता पुरा ।
मयापि कथितं पुण्यमाख्यानं प्रथितं तथा ।

[ ( L. 1 ) D7 वसुभौमाच्छ्रुतं; T2 G1 °भौमाश्रितं· — ( L. 2 ) D7 T1 G4 तु ( for [अ]पि ). G1 कथितं ( for प्रथितं ). M4 पृथिवीपते ( for प्रथितं तथा ). T2 M2 तव; G1 त्वया; M1. 3 तदा ( for तथा ). ]

Colophon : G3 missing. — *Sub-parvan :* Ś1 K V1 B Da Dn D1–7 T G1. 2. 4 M राजधर्म· — *Adhy. name :* Ś1 K1. 2 B1. 2 Da D1 वसुहोमोपाख्याने दंडोत्पत्तिः; Bo. 3–5 Dn1 D3. 5 दंडोत्पत्तिः; D4 वसुहोमोपाख्याने दंडजागरोत्पत्तिः; D6 दंडोत्पत्त्युपाख्यानं; T1 G2. 4 वसुहोममांधातृसंवादः; M1–3 दंडप्रजागरोत्पत्तिः. — *Adhy. no.* ( figures, words or both ): B3. 4 Dn1 121; Da1 123; Dn2 D6 122 ( as in text ); D7 T2 G1. 2 M 124; D8 110; T1 G4 125. — *Śloka no. :* Da Dn 56.

## 123

☞ G3 is missing for this adhy. ( cf. v. l. 12. 112. 1 ).

1 Before the ref., G1 ins. कामंदारिष्टसंवादः on marg. D8 om. the ref. — a ) B1 D1 ततो; D7 अथ ( for तात ). D4 om. from धर्मार्थ up to प्रतिष्ठिता ( in 1d ). — d ) K2. 3 तिष्ठेत्रेषु; K5 ष्ठेतेत्त्रेव; Dn तिष्ठेत्केषु; D7 क्षत्रियेषु ( for त्रिष्वेतेषु ). G1 M1. 4 प्रतिष्ठिताः.

2 a ) K1. 4 Da1 D1 धर्मार्थकामः. G1 किंमूलः. — b ) D7 प्रभवः प्रलये च के; T1 G2. 4 M प्रभवः प्रलयश्च कः; T2 G1 प्रलयः प्रभवश्च कः. —Ś1 K2. 4 D1 om. 2cd. — c ) K1 V1 B Da1 D3. 3. 5. 6. 8 [अ]नु-

अन्योन्यं चानुषजन्ते वर्तन्ते च पृथक्पृथक् ॥ २

भीष्म उवाच ।

यदा ते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥ ३
धर्ममूलस्तु देहोऽर्थः कामोऽर्थफलमुच्यते ।
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ॥ ४
विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये ।
मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ५
धर्मः शरीरसंगुप्तिर्धर्मार्थं चार्थ इष्यते ।
कामो रतिफलश्चात्र सर्वे चैते रजस्वलाः ॥ ६
संनिकृष्टांश्चरेदेनान्न चैनान्मनसा त्यजेत् ।
विमुक्तस्तमसा सर्वान्धर्मादीन्कामनैष्ठिकान् ॥ ७
श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयात्क्षणात् ।
बुद्ध्या बुध्येदिहार्थे न तद्धा तु निकृष्टया ॥ ८

---

सज्जंते; D7 T G2.4 M °षज्यंते; G1 °कर्षते (for °षजन्ते). — d) D4.7 S (G3 missing) वा (for च). B2 कथं नृप; B3 पुराकृतः; Da1 कथंचन; D7 S (G3 missing) कथं पृथक् (for पृथक्पृथक्).

3 B2 D3 om. the ref. — a) Ś1 K1-3 D1.4 यदा तेभ्यः; D7 S (G3 missing) य एते स्युः (for यदा ते स्युः). — b) K3.5 B0.3-5 Dn D3.5.6.8 लोके धर्मार्थनिश्चये; B2 D2.4 लोकधर्मार्थनिश्चये (D4 °यः); Da लोकसंस्थात्म°; M2 लोके संस्थास°. — c) Ś1 K1.2 D1 काले; D7 T G1.2.4 काम- (for काल-). Ś1 K2 D1 -प्रभाव- (for -प्रभव-). K1 -संस्थाने (for -संस्थासु). ❀ Cv: कालात्प्रभव उत्पत्तिः संस्था मरणं यासु तासु प्रजासु सजन्ते इति योजना । ❀ — d) K1 सज्यंते; D1 G1.2 M मज्जंते; D2 सजते; D4 सज्जते; T2 मज्यंते (for सजन्ते). K5 V1 B Da D2.3.5-8 T G1.2.4 M1.3.4 सदा (for तदा).

4 a) K3 Dn D4 स; K5 lacuna (for तु). K1 देहार्थः; K3.5 Dn1 दैवार्थः; K4 V1 B D2.3.5.8 देहार्थः; Da देहार्था; Dn2 वेदार्थः; D4 देवार्थः (for देहोऽर्थः). B5 (marg.) धर्ममूलः सदाचारः; D7 S (G3 missing) धर्म( G2 मंत्र )मूलोर्थ इत्युक्तः. — b) Ś1 K1.2.4 D1 कामार्थं; V1 B0.3-5 Da1 D2.8 (by corr.). 5.8 कामार्थः; B2 D3 (before corr.) कामार्थ-; Dn2 कामोर्थ (for कामोऽर्थ-). K2 D1 धनम्; K4 धर्मम्; K5 D6 M1.3.4 -फल (for -फलम्). — c) D4 om. from सर्वे up to मूलमे (in 5c). — d) M2 संकल्प-.

5 D4 om. up to मूलमे (cf. v. l. 4). — a) T G4 M1.3.4 विषयाश्चापि; G1.2 M2 °यश्चापि (for °याश्चैव). — b) T1 G4 भारत-; T2 -भावार्थ- (for आहार-). — c) B0 एव (for एतत्). — d) D4 निर्वृत्तिर्.

6 a) K3-5 B0.2-5 Da Dn D2.3.5.6.8 धर्मात् (for धर्मः). K2.4 शरीरे; D1 शरीरं (for शरीर-). K1.4 D1 संगुप्ति-; D4 -संशुद्धि- (for -संगुप्तिर्). K1 वर्त्मार्थं; T1 G1.4 M1.3.4 धर्मार्थश्च (for धर्मार्थं). B5 हि (for च). Dn2 इष्यते प्रजा (for चार्थ इष्यते). K1 दुष्यंते; K3 Dn1 D4 G2 उच्यते (for इष्यते). D7 धर्मार्थाश्च त्रयः सदा. — c) Dn2 कामा; D1 कामे (for कामो). D1 (before corr.) चार्थं. — d) K2.5 Dn ते च; K3 D4 एते; D2 वै ते (for चैते). D7 S (G3 missing) सर्वे रति( G2 सुख )फलाः स्मृताः. ❀ Cv: रजस्वलाः रजोगुणविकाराः । ❀

7 a) D1 संनिविष्टांश्च; D7 S (G3 missing) °कृष्टश्च. B1 च विदितान् (for चरेदेनान्). K2.3.5 V1 B Dn2 D2.3.5-8 G1.2 M1.2 एतान् (for एनान्). — b) K2-5 V1 B D G2 [ए]तान् (for [ए]नान्). — c) K3 D4 वियुक्तान् (for विमुक्तस्). K1 तु समा; K2.4.5 V1 B Da Dn D2.3.5.6.8 T1 G2.4 M2 तपसा; K3 मनसा; D1 lacuna (for तमसा). — K5 reads from $7^d$ up to the end of this adhy. on marg. — d) D4 कामादीन् (for धर्मादीन्). B1 मम नैष्ठिकान् (for कामनै°).

8 K5 reads 8 on marg. — a) K5 Dn श्रेष्ठे; V1 B0-2 Da श्रेष्ठां; B5 श्रेष्ठं; D1.4 श्रेष्ठा (for श्रेष्ठ-). Ś1 K1.2 -वृद्धिस्; V1 B1.2 Da -बुद्धिं (for -बुद्धिस्). Da त्रिगर्तस्य (for त्रिवर्गस्य). K3 श्रेष्ठादीनि त्रिवर्गस्य. — b) K2.4 यदायं; D4 यदिदं; D7 S (G3 missing) उदयं (for यदयं). K3 प्राप्नुयां. K3 D4 क्षणं; K5 V1 B Da Dn D2.3.5.6.8 नरः (for क्षणात्). — B2.3 D8 T2 G2 M2 Ca ins. after $8^{ab}$: Da after 8:

284* कर्मणा बुद्धिपूर्वेण भवत्यर्थो न वा पुनः ।

[ = (var.) 12. 128. $7^{ab}$. B2 Da भवत्याद्यो (for °त्यर्थो). ]

B2.3 Da D3 Ca cont.:

285* अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमवाप्यार्थमन्यत्राद्योपकारकम् ।

अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
संप्रमोदमलः कामो भूयः स्वगुणवर्तितः ॥ ९
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कामन्दस्य च संवादमङ्गारिष्ठस्य चोभयोः ॥ १०
कामन्दमृषिमासीनमभिवाद्य नराधिपः ।
अङ्गारिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययम् ॥ ११

यः पापं कुरुते राजा काममोहबलात्कृतः ।
प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम् ॥ १२
अधर्मो धर्म इति ह योऽज्ञानादाचरेदिह ।
तं चापि प्रथितं लोके कथं राजा निवर्तयेत् ॥ १३

कामन्द उवाच ।

यो धर्मार्थौ समुत्सृज्य काममेवानुवर्तते ।

C. 12. 4538
B. 12. 123. 15
K. 12. 123. 15

---

[ Ca om. line 2. — (L. 2) B2 Da अथाप्यन्यद् (for अवाप्यार्थम्). Da अन्यद्राजोपहारकं (for the post. half).]

— After 285*, Da repeats 8cd with var. — c) K3 बुद्धे (for बुद्ध्वा). K3 corrupt; K5 V1 B Da Dn D2.3.5.6.8 बुद्धिर् (B5 °द्धेर्); D7 T G2.4 M2 बुद्ध्या; G1 M1.3.4 बुद्धा (for बुध्येद्). K1 इवार्थेन; D2.3.5 अहार्थेन; D4 इहार्थे च; M3 इहात्मेन (for इहार्थे न). Cv बुद्ध्वा बुद्धिरिहार्थेषु. — d) K3.5 V1 Bo.2–5 Dn D2.3.5.6.8 Cv तदज्ञान-; B1 Da (first time) तत्त्वज्ञान-; B5 (marg.) तदाप्नोति; Da (second time) न वाप्नोति; D7 तदहाय (for तदह्ना तु). D4 वनिःक्रियात् (sic) (for निकृष्टया). — After 8, Da ins. 284*, 285*.

9 a) D7 अपश्यन्नमलो; T G1.4 M1.3.4 अवध्यानमलो (G1 °ला); M2 अलब्धानमलो (for अपध्या°). ❀ Ca: अपध्यानं परानिष्टचिन्तनम् । ❀ — b) D1 मूलार्थस्य (for मलोऽर्थस्य). T1 G2.4 विनिग्रहं (G2 °हः) (for निगूहनम्). — c) Ś1 K4 D1 सप्रमोदमलः; K3 V1 B2 (marg.) Da अप्रमोदमलः (Da °तः); D7 संप्रमोहोबलः; S (G3 missing) संप्रमोहमलः (for °मोदमलः). K1 कामा; Da कर्म (for कामो). — d) D7 तु गुण-; D8 सगुण-; T1 G2.4 तद्गुण-; G1 स्वगुण- (for स्वगुण-). K2–4 V1 B1 D4 M2 -वर्तिनः; K5 Bo.3–5 Dn D2.3.5.6 Cv -वर्जितः; Da -वर्धिनः; D7 T G1.2.4 M4 -वर्धितः (for -वर्तितः). ❀ Ca.b: स्वगुणवर्धितः यः पुनर्धर्मोऽर्थः कामो वा स्वगुणैरहिंसादानभोगप्रमोदादिभिर्वर्धितः (Cb अनुकूलितः) स भूयोऽतिशयेनोत्कृष्टो भवति । ❀

10 a) T1 om. from रन्तीम up to पुरातनम् (in 10b). — c) K2.4 D1 कामर्दस्य च; K5 Bo.2–4 Dn D3.5 कामंदकस्य; D7 S (G3 missing) अरिष्टस्य च (for कामन्दस्य च). K1 कामार्दकशमो वादम्. — d) K3 V1 B1–5 Da D8 अंगरिष्ठस्य; K5 Dn D3 आंग°; Bo D3.5.6 अंगि° (for अङ्गा°). Da [उ]भयः (Da2 °याः). D7 S (G8 missing) कामंदस्य च भारत.

11 a) K2 D1 कामर्दम्; K4 कामार्थम् (for कामन्दम्). — b) V1 B1 D7 T1 G1.2.4 M नराधिप; B2 Da महामनाः; D3.5.6.8 जनाधिपः (for नरा°). — c) K5 Dn D6 आंगरिष्ठो; V1 B1–4 Da D1.3 अंग°; Bo.5 D2.3.5 अंगि°; D7 अंगोनिष्ठो; T G1.4 M1.3.4 अंगोरिष्ठो (for अङ्गा°). D7 S (G3 missing) [s]नु- (for sथ). — d) D7 S (G3 missing) समयमध्यर्थं (for °पर्ययम्).

12 Before 12, D7 T G1.4 ins. अरिष्ट उवाच. — b) T1 G2.4 कामलोभ- (for °मोह-). G2 (*inf. lin.* as in text) -भयाश्रुतः. — c) D4.7 T G1.2.4 M1.3.4 प्रत्यापन्नस्य; M2 प्रत्युत्पन्नस्य (for प्रत्यासन्नस्य). K1.4 B1.5 D5.7 T1 G4 M1.3 तस्यर्षेः; V1 Bo Da राजर्षेः; D4 तस्यार्थे (for तस्यर्षे). — d) Bo पापप्रनासनं; D1 °प्रणाशकृत्; D8 °प्रशाशनं (for °प्रणाशनम्).

13 a) K3.5 V1 B D (except D4) S (G3 missing) अधर्म (D1.7 °र्मे) (for अधर्मो). B2 धर्मम् (for धर्म). K1.3.5 V1 B Da Dn D2.3.5.6.8 T2 G1 च; K4 हि; D4 [ए]वं; D7 T1 G2.4 यो (for ह). — b) K3.5 B4 Dn D2–6.8 नरः; V1 Bo–3.5 Da नृपः (for इह). D7 T1 G2.4 मोहादाचरते नृप (T1 G4 °पः); T2 G1 M1–3 यो मोहादाचरेन्नृपः (G1 °प); M4 यो मोहादनुवर्तते. — c) V1 B1 Da तच्चापि; M2 तस्यापि (for तं चापि). — d) B3.4 D2.5.6.8 तु वर्तयेद्; Da1 निवर्तते; D8 तु वर्तयत् (for निवर्तयेत्).

14 D8 G1 om. the ref. K2 कामदेव; D1.7 कामद; T2 कामदक (for कामन्द). — a) D7 S (G3 missing) transp. यो and धर्मार्थौ. K3 धर्मार्थेस्; K4 D1 धर्मर्थौ. K3 असमसृजत्; K5 V1 B Da Dn D2–6.8 परित्यज्य (for समुत्सृज्य). — b) Bo [अ]थ वर्तते; D4 [अ]नुवर्तयेत्. — c) Da1 धर्मार्थि-. — d) K1 इच्छति; K4.5 B3.4 D2.3.5.6.8 G2 M2 इहेच्छति; B1 इहाश्नुते; B2 इहासुते; Da इहाश्नुते; Dn2 इहेच्छसि; T1 G4 M1.3.4 इहच्छेति (for इहा°). D7 T2 G1

G. 12. 4538
B. 12. 123. 15
K. 12. 123. 15

स धर्मार्थपरित्यागात्प्रज्ञानाशमिहार्छति ॥ १४
प्रज्ञाप्रणाशको मोहस्तथा धर्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥ १५
दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ १६
तं प्रजा नानुवर्तन्ते ब्राह्मणा न च साधवः ।
ततः संक्षयमाप्नोति तथा वध्यत्वमेति च ॥ १७
अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।
जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् ॥ १८
अत्रैतदाहुराचार्याः पापस्य च निबर्हणम् ।
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥ १९
महामना भवेद्धर्मे विवहेच्च महाकुले ।
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः ॥ २०
जपेदुदकशीलः स्यात्सुमुखो नान्यदास्थितः ।
धर्मान्वितान्संप्रविशेद्बहिः कृत्वैव दुष्कृतीन् ॥ २१
प्रसादयेन्मधुरया वाचाप्यथ च कर्मणा ।

---

प्रज्ञाया ( D7 यः प्रज्ञा· ) नाशमृच्छति.

15 a) K1.2.4 D1.4 प्रज्ञाप्रनाशको ( D1 °के; D4 °का ); K5 V1 Bo.2.3 Da Dn D7 S ( G3 missing ) °ना( G1 °नौ )शात्मको; B1 °नाशान्महा- ( for °प्रणाशको ). — b) Da D7 T2 G1 -नाशनः ( for -नाशकः ). — c) V1 नास्तिक्यता; D4 °कतां ( for °कता ). M2 तस्मान्नास्तीति कर्ता वै. — d) Bo दुराचारस्य; B2 M1 °राश्च; M2 °रं च ( for °रश्च ). B2 Da जातयः ( for जायते ). D8 दुराचारप्रजाश्च ये.

☞ With 16–23, cf. B. 12. 134. 9a–15ab.

16 a) K1 Bo.4 Dn1 D4 T2 G1.2 दुराचाराद् ( for °रान् ). Bo यथा; D7 तथा ( for यदा ). — b) K1 प्रदुष्टात्मा; B1 प्रदुष्टाश्च; D3.5.6.8 प्रहृष्टान्न ( for प्रदु° ). — d) K3 D4 गृहात्सर्पवतो यथा.

17 a) Dn2 ते ( for तं ). D7 S ( G3 missing ) नानुरज्यंते ( for °वर्तन्ते ). — b) K1 D1 ब्रह्मणा; D7 S ( G3 missing ) न विप्रा ( for ब्राह्मणा ). — c) V1 B3 Da Dn2 D2.4.8 अतः; B2 अथ; D1 तथा ( for ततः ). K2.3.5 Dn D4.6 T2 G2 संशयम् ( for संक्ष° ). — d) Da1 यथा ( for तथा ). B3.4 Da D2.3.5.8 T1 G2.4 M एव च; T2 G1 एष्यति ( for एति च ).

18 a) Dn2 अपध्वस्त्ववतो दुःखं; D4.5 अपध्वस्तम( D5 °व )तो दुःखं; T2 G1 अपध्वस्तः सत्वमंदो. ❀ Cv: अपध्वस्तः सज्जनैर्धिक्कृतः । ❀ — b) K3 जीवंति; K5 Dn1 जीवितम् ( for जीवति ). K2.4 D4 जीवितुं; K5 Dn1 ऋच्छति; Dn2 D5 जीवतां; G1 M4 जीवतं ( for जीवितम् ). — c) K1.4 D1 जीवेश्च; Bo.5 जीवितं; D4 जीवतु; D6 जीवे च; D7 T G2.4 M2.4 जीवते; G1 M1.3 जीविते ( for जीवेच्च ). D7 T1 G4 अवध्वस्तस् ( for अप° ). — d) V1 B1.3.4 D2.3.5.6.8 तद्ध्रुवं; B2 Da ध्रुवं तं ( for तच्छुद्धं ). D7 S ( G3 missing ) शुद्धं मरणमेव तत्.

19 a) D7 T G1.2.4 तस्यैतद्; M1–3 तत्रैतद्; M4 ततैतद् ( for अत्रैतद् ). D6 corrupt. — b) K2.3.5 V1 B Da Dn D2.3.5.6.8 परिगर्हणं; D4 परिगर्हा*; D7 T G1.4 M2 परिवर्तनं; G2 M1.3.4 परिवर्जनं ( for च निबर्हणम् ). — d) K1 D1 ब्रह्मणेषु; D4 ब्राह्मणैस्तु ( for ब्राह्मणेषु ).

20 a) Ś1 K1 D1 महामनो; D4 °नतो; T2 °स्मना ( for °मना ). D4 [s]भवद् ( for भवेद् ). D4.7 T1 धर्मो ( for धर्मे ). — b) Ś1 K4 विवाहश्च; K1 D1 विवहेश्च; K2 विवाहाश्च; D5 विरहेच्च; D7 विवाहेच्च; D8 विहवेच्च; T G1.2.4 विवदेच्च ( for °हेच्च ). T G1.2.4 महाबलैः; M2.4 °कुलैः ( for °कुले ). — c) K3 om. च. — d) G1 क्षमायुक्तं; M4 °युक्ता.

21 a) G4 जीवेद् ( for जपेद् ). D4 om. from दुदक up to कृत्वैव ( in 21d ). K3 सन् ( for स्यात् ). — b) D1 सुमुखि; T2 °खं; M2 समुखो ( for सु° ). K3 नान्यथा स्थितः; D7 S ( G3 missing ) न च नास्तिकः ( for नान्यदास्थितः ). K5 V1 Bo.2–5 Da Dn D2.3.5.6.8 सततं सु( Da1 दुः )खमास्थितः; B1 सततं स्वसुखे स्थितं. — c) G1 धर्मान्वितात्. V1 B3.4 D2.3.5.8 संविविशेद्; Dn1 स प्रविशेद्; G2 संप्रणयेद् ( for °विशेद् ). — d) K V1 B Da Dn D2.6.8 कृत्वेह; D1.3.5 T2 कृत्वेव; D7 T1 G1.2.4 M कृत्यैव ( for कृत्वैव ). K5 दुष्कृतान्; D4 दुःकृतात्; D7 S ( G3 missing ) दुष्कृतं ( M4 °तः ).

22 a) B1 प्रसादयन्. — b) K5 V1 Bo.3–5 Dn D2–6 S ( G3 missing ) वाप्यथ; B1 चाप्य*; D7 वाप्यधि· ( for [अ]प्यथ च ). — c) K4.5 Dn तव ( for इति ). G1 M1.3.4 अस्तीति ( for असीति ). B1 वदे; D7 वदन्; G1 पदे ( for वदेन् ). — d) D7 T G1.2.4

इत्यसीति वदेन्नित्यं परेषां कीर्तयन्गुणान् ॥ २२
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
पापान्यपि च कृच्छ्राणि शमयेन्नात्र संशयः ॥ २३
गुरवोऽपि परं धर्मं यद्ब्रूयुस्तत्तथा कुरु ।
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥ २४

इति श्रीमहाभारते शान्तिपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## १२४

युधिष्ठिर उवाच ।
इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ १
यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ।
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते ॥ २
कथं नु प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किंलक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर ॥ ३
भीष्म उवाच ।
पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागताम् ॥ ४

C. 12. 4582
B. 12. 124. 4
K. 12. 124. 4

---

M4 पूर्वेषां; M1. 3 सर्वेषां (for परेषां). K1 कीर्तये; D1 केतुयन्; G2. 4 M2 कीर्तयेद् (for °यन्).

23 [a]) Da D7 अपापे. D4 अपापी ह्यघनाचारा (sic). — [b]) K1 बहु च ते; K4 बहु*ते; D1 चवद्रुते; D4 बहुमता (for °मतो). — [c]) K3. 5 V1 B Da Dn D2-6. 8 हि; D7 T G4 M सु; G1 स्व-; G2 [इ]ह (for च). — [d]) Bo. 2 D7 (before corr.) समयेन्; Da प्रशमेन्; G1 शमयन् (for °येन्). D7 S (G3 missing) नेह (for नात्र).

24 K1 om. (hapl.) $24^{ab}$. — [a]) K8 गुरवे. K8 om. from पि परं up to प्स्यसि (in $24^{d}$). K4. 5 V1 Bo. 2-5 Dn D2-8 S (G3 missing) हि (for ऽपि). Da हि यं (for परं). D4 धर्म्यं; G1 धर्मो (for धर्मं). — [b]) K2. 5 Dn1 D1. 4 T G1. 2. 4 यं (for यद्). K2. 5 Dn1 D7. 8 T G1. 2. 4 तं (for तत्). — [c]) D8 कुरूणां (for गुरूणां). M1. 3 प्रसादेन. — [d]) Da M1 अवाप्स्यति.

Colophon: G3 missing. — *Sub-parvan:* Ś1 K V1 B Da Dn D1-7 T2 G1. 2. 4 M राजधर्म. — *Adhy. name:* Ś1 K2. 4 V1 B Da Dn1 D2. 3. 5. 6 कामंदांग( Ś1 °गा-; D2 °गि )रिष्ठसंवादः; K1. 3 D4 T1 G2. 4 M1-3 कामंदारिष्ठसंवादः; D1 कामादंगारिष्ठसंवादः; D7 धर्मार्थकामनिश्चयः. — *Adhy. no.* (figures, words or both): K4 Dn2 D2 123 (as in text); B1 113; B4 Dn1 122; B5 110; Da1 124; D7 T2 G1. 2 M 125; D8 111; T1 G4 126. — *Śloka no.:* Dn 24; D8 25.

### 124

☞ G3 is missing for this adhy. (cf. v. l. 12. 112. 1).

1 Before the ref., G1 ins. शीलविवरणं on marg. D8 om. the ref. — [a]) D7 S (G3 missing) मनुष्येंद्र (for नरश्रेष्ठ). — [b]) T1 जना (for सदा). D8 शुचि (for भुवि). — Before $1^{cd}$, K5 ins. युधिष्ठिर उवाच. — D4 om. $1^{d}$-$2^{a}$. — [d]) Ś1 K1. 4 D1. 7 [स]सौ; B2 Da सै (for मे).

2 D4 om. $2^{a}$ (cf. v. l. 1). — [a]) Ś1 K2 D1. 4 तच्छून्यम्; K1 तः छूलम् (sic); D7 T G1. 2. 4 चेच्छक्यम् (for तच्छक्यम्). — [b]) Ś1 K1. 4 D1 ज्ञातं (for ज्ञातुं). K3 D4 धर्मविदां (for °भृतां). B1 Da वरः; D4 चरः (for वर). — V1 reads $2^{c}$-$3^{d}$ on marg. — [d]) T2 G1 M [इ]दम् (for [ए]तद्).

3 V1 reads 3 on marg. — [a]) K1. 3. 5 D2. 4. 8 T1 G1 तु; Dn तत्; D1 न (for नु). K5 शीले. — [c]) D1 यत् (for तत्). T2 G1 लक्षणं च तदा (G1 °था) प्रोक्तं. — [d]) B2 तन्मे ब्रूहि पितामह.

4 D8 om. the ref. — [a]) D1 [इ]यं; D7 T1 G1. 4

C. 12. 4553
B. 12. 124. 5
K. 12. 124. 5

इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य ह ।
सभायां चावहसनं तत्सर्वं शृणु भारत ॥ ५
भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।
दुर्योधनस्तदासीनः सर्वं पित्रे न्यवेदयत् ॥ ६
श्रुत्वा च धृतराष्ट्रोऽपि दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहितं दुर्योधनमिदं वचः ॥ ७
किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यसि ॥ ८
यथा त्वं महदैश्वर्यं प्राप्तः परपुरंजय ।
किंकरा भ्रातरः सर्वे मित्राः संबन्धिनस्तथा ॥ ९
आच्छादयसि प्रावारानश्नासि पिशितोदनम् ।
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥ १०

दुर्योधन उवाच ।

दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ११
दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।
अश्वांस्तित्तिरकल्माषान्रत्नानि विविधानि च ॥ १२
दृष्ट्वा तां पाण्डवेयानामृद्धिमिन्द्रोपमां शुभाम् ।

---

M1.3.4 [इ]दं (for [इ]ह). — b) Bo.3–5 D2.3.5.6.8 T2 G1 भारत (for मानद). — c) D1 M1.3 तप्तमानेन (for तप्य°). — d) K3 श्रेयं (for श्रियं). K3.4 Dn2 D6 तथागतं; D1 तथा*गां; D7 S (G3 missing) तथाग( M2 °ग्र )तां (for तथागताम्).

5 For the incident, cf. 2. 43–45. — b) K1 भव (for तव). K2.3 B5 D1.4.7.8 T G1.2.4 M1.3.4 च (for ह). — c) Ś1 K1 D1 चाथ हसने; K2.3 B3 चाह वचनं; Dn2 चाहवसनं; D2 वातहसनं; D7 S (G3 missing) चापहसनं (for चाव°). — d) Bo सर्वं तत् (by transp.).

6 a) D1 भवतांस् (for °तस्). — b) K4 समृद्धं (for °द्धिं). K1 चापिनुत्तमां (sic); Da1 चास्यनुत्तमां; D6 चाप्यनुत्तमं. — c) Bo तदाशीलः; T2 G1 M1.3 तदा दीनः; G2 तदा दृष्ट्वा; M4 तदादि स (for तदासीनः). — d) Dn2 पित्र्यं. D1 न्यवेदयेत्.

7 a) K2.3.5 V1 Bo.2–5 Da Dn D2.3.5.6.8 श्रुत्वा हि; B1 M2 श्रुत्वापि; D7 G1 श्रुत्वाथ; T1 G2.4 स श्रुत्वा; M1.3.4 श्रुत्वा तु (for श्रुत्वा च). B1 Dn2 धृतराष्ट्रो हि; Dn1 °ष्ट्रश्च (for °ष्ट्रोऽपि). — b) Bo.4 T1 G2 तथा (for तदा). — d) T1 दुर्योधनहितं वचः.

8 a) Da तप्यते. D1 पुत्रं. — b) D1 इच्छसि. D4 om. from त्त्वतः up to नेष्यामि (in 8c). — c) D1 अनुनेष्यामि; T1 G2.4 अनशिष्यामि (for अनुनेष्यामि). — d) K1.3.5 B1.3–5 D (except D4) S (G3 missing) भविष्यति.

9 a) K3.5 V1 B Da D3–6.8 यदा त्वं; Dn2 त्वया च; D2 यया त्वं; D7 T2 G1 यदा त्वां; T1 G2.4 M यदा त्वा (for यथा त्वं). K2.4 Da D1 परमैश्वर्यं; D6 महदैश्वर्ये (for °र्यं). — b) K1 प्राप्ताः; K2–4 B4 Dn1 D3.5.7 S (G3 missing) प्राप्तं (for प्राप्तः). D4.8 परपुरंजयः; G1 परमदुर्जय (for परपुरंजय). — c) K4 D6 भ्रातराः. — d) N (except Ś1 K1) मित्र- (for मित्राः). K3 Da तदा; Dn1 D3.5 सदा (for तथा). S (G3 missing) मित्रसंबंधिबांधवाः.

10 = 2. 45. 9. — a) K3 प्राच्छादयसि; M1.3 आच्छादयति. K3 प्रावरान्; Da1 G1 प्रवरान् (for प्रावारान्). — b) K3.5 D2 नाश्नासि; D4 नास्नासि (for अश्नासि). K3–5 V1 B Dn D1–3.5–8 T1 G2.4 पिशितौदनं; M1.3 पिशितोशनं (for °दनम्). — c) Ś1 K2.4 D1 आ( D1 अ )जानीया; K1 आज्ञा**; V1 Bo.1.4 अजा( B4 °ज )नेया. K5 V1 B Da Dn D2.3.5–8 M4 [अ]श्वाः; D1 M1–3 त्वा; D4 त्वं (for त्वां). — d) K4 [अ]पुत्रक; M2–4 पुत्रकः (for पुत्रक). K5 V1 B Da Dn D2–6.8 G4 केनासि हरिणः कृशः.

11 With 11, cf. 2. 45. 18. D3 om. the ref. — a) M4 अष्ट (for दश). K3 B1 [ए]तानि; B5 चापि; D7 T G2.4 M1–3 तात; M4 [अ]शीति- (for तानि). D4 प्रसिद्धा त्रिसहस्राणि. — c) Ś1 K1.2.4 D1.4 रुक्मपात्रेषु; V1 Bo.1.3–5 D7 S (G3 missing) रुक्म-( M1.3.4 °ग्म )पात्रीभिर्. — d) Da1 -निवेशनं.

12 a) K2 Dn1 तां च (by transp.); Bo.5 चैतां. D4.6 सभा दिव्या ( D6 °व्यां ) (for सभां दिव्यां). D7 S (G3 missing) दृष्ट्वा सभां च तां दिव्यां. — b) B1 पुष्पमूल- (for दिव्यपुष्प-). T2 G1 -फलायुतां (for -फलान्विताम्). — c) Dn2 अश्वा-; D1.4 अश्व- (for

अमित्राणां सुमहतीमनुशोचामि मानद ॥ १३
धृतराष्ट्र उवाच ।
यदीच्छसि श्रियं तात यादृशीं तां युधिष्ठिरे ।
विशिष्टां वा नरव्याघ्र शीलवान्भव पुत्रक ॥ १४
शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किंचिदसाध्यं वै लोके शीलवतां भवेत् ॥ १५
एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥ १६
एते हि पार्थिवाः सर्वे शीलवन्तो दमान्विताः ।
अतस्तेषां गुणक्रीता वसुधा स्वयमागमत् ॥ १७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत ॥ १८
प्रह्रादेन हृतं राज्यं महेन्द्रस्य महात्मनः ।
शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशीकृतम् ॥ १९
ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।
उवाच च महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥ २०
ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम् ।
कथयामास भगवान्देवेन्द्राय कुरूद्वह ॥ २१

C. 12. 4570
B. 12. 124. 22
K. 12. 124. 22

---

अश्वांस् ). Bo-3. 5 Da D3. 5. 7 S ( G3 missing ) तित्तिरि- ( for तित्तिर- ). — $^{d}$ ) Dn1 वस्त्राणि; G1 नृत्तानि ( for रत्नानि ).

13 $^{b}$ ) B3 D2 वृद्धिम्; D4 ऋद्धि-; G1 उर्वीम् ( for ऋद्धिम् ). K1. 3 D4 चेंद्रोपमां; V1 B1. 2 Da Dn वैश्रवणीं ( for इन्द्रोपमां ). D4 शुभा. — $^{c}$ ) D8 सुमहता. — $^{d}$ ) K3 चानघ; Dn T2 G1 भारत; D4 वानघ; D6 नारद; M3 मानदः ( for मानद ).

14 D8 om. the ref. — $^{a}$ ) D8 T2 G1 M2. 4 यदिच्छसि. M3 प्रियं ( for श्रियं ). — $^{b}$ ) K5 V1 B Da Dn D2. 3. 5–8 T1 G1 M यादशी; D4 तादशी ( for यादशीं ). K5 V1 B Da Dn D2. 3. 5–8 M2. 4 सा; D1 तं ( for तां ). D8 युधिष्ठिर. — $^{c}$ ) Da वसिष्ठा; D2. 4. 6 विशिष्टा ( for °ष्टां ). D4 च ( for वा ). B1 D7 T1 G1. 4 नरश्रेष्ठ ( for °व्याघ्र ).

15 $^{a}$ ) G1 लोकान्. — $^{b}$ ) K5 D2. 6. 8 नरेश्वर; M2 नरसंशयं ( for न संशयः ). — $^{c}$ ) V1 D7 कश्चिद् ( for किंचिद् ). Bo. 3–5 D2. 3. 5. 6. 8 हि; V1 स्वे; D7 S ( G3 missing ) स्याद् ( for वै ). — $^{d}$ ) D7 S ( G3 missing ) सतां ( for भवेत् ).

16 With 16$^{a}$, cf. 3. 126. 37 : 12. 29. 80. — $^{b}$ ) K4 G2 त्र्यहेन. K5 त्र्यहेण जयमासवान्. — With 16$^{c}$, cf. B. 7. 64. 1–5. — $^{d}$ ) K4 M1. 3 पृथिवी. K3 V1 B Da Dn D2–6. 8 प्रतिपेदिरे ( for °पेदिवान् ).

17 $^{b}$ ) K3 V1 B1–4 Da Dn D3. 5 दयान्विताः; D4 हया°; D7 S ( G3 missing ) यशो° ( for दमा° ). — $^{c}$ ) T1 G1. 2. 4 ततस् ( for अतस् ). K5 गुणक्रांता; D6 Cnp °क्रीडा ( for °क्रीता ). — $^{d}$ ) K4 स्वसुम् ( for स्वयम् ). K5 V1 B Da Dn D2. 3. 5–8 T1 G2. 4 आगता ( for आगमत् ). — After 17, K4. 5 V1 B Da Dn D2. 3. 5. 6. 8 ins. :

286* दुर्योधन उवाच ।
कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
येन शीलेन संप्राप्ताः क्षिप्रमेते वसुंधराम् ।

[ D8 om. the ref. — ( L. 2 ) B1 Dn1 तैः ( B1 ते ) प्राप्ताः; Dn2 तैः प्रोक्ताः ( for संप्राप्ताः ). K5 Bo. 2. 5 Dn D6 एव; Da एकां ( for एते ). B3 Da2 Dn D2. 6 वसुंधरा. ]

18 Before 18, K4. 5 V1 B Da Dn D2. 3. 5. 6 ins. धृतराष्ट्र उवाच. — $^{a}$ ) T1 om. from प्युदा up to पुरा ( in 18$^{b}$ ). — $^{b}$ ) D4 पुरातन. — $^{c}$ ) V1 B1 प्रह्लादेन; B2 ( marg. as in text ). 3. 4 Da D2. 3. 5. 6. 8 T1 G2. 4 M1. 3. 4 नरदेव ( for नारदेन ). D4 गीतं; D7 S ( G3 missing ) वृत्तं ( for प्रोक्तं ). — $^{d}$ ) G2 आवृत्य ( for आश्रित्य ).

19 $^{a}$ ) Some MSS. प्रह्लादेन. D1 हृतं; D8 कृतं ( for हृतं ). — $^{b}$ ) T2 G1. 2 M देवेंद्रस्य ( for महेन्द्रस्य ). — $^{c}$ ) D1 शूलम् ( for शीलम् ). — $^{d}$ ) Ś1 K2. 4 V1 B1–4 Da Dn1 D2. 3. 8 वशे कृतं. D6 त्रैलोक्यं वचसे कृतं.

20 $^{a}$ ) D1 शुक्रः ( for शक्रः ). — $^{b}$ ) D4 समुपास्थितः. — $^{c}$ ) Dn D2. 6 तमुवाच; D7 S ( G3 missing ) उवाच स ( T1 G4 सु- ) ( for उवाच च ). V1 B1 Da महाप्रज्ञं; Bo. 2 °प्राज्ञं; D1 °प्राज्ञाः; M1–3 °प्राज्ञ ( for °प्राज्ञः ). — $^{d}$ ) Ś1 K4 D1 शीलम्; Da1 श्रेयम् ( for श्रेय ). K1 इच्छसि. K4 D1 वेदितं.

21 $^{b}$ ) K3 Da D2–6 G1 निः ( G1 न ) श्रेयसं; B1 नैश्रेयं*. — $^{d}$ ) D7 देवेंद्रोयं ( sic ). D6 कुरूद्वहा; T1 महात्मने; T2 कुरूत्तम ( for °द्वह ).

C. 12. 4571
B. 12. 124. 23
K. 12. 124. 23

एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ क्व विशेषो भवेदिति ॥ २२

बृहस्पतिरुवाच ।

विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः ।
तत्रागमय भद्रं ते भूय एव पुरंदर ॥ २३

धृतराष्ट्र उवाच ।

आत्मनस्तु ततः श्रेयो भार्गवात्सुमहायशाः ।
ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः ॥ २४
तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ॥ २५
भार्गवस्त्वाह धर्मज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेण ततो हृष्टश्च सोऽभवत् ॥ २६
स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
*सृत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ २७
प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ ।
त्रैलोक्यराज्ये सक्तस्य ततो नोपदिशामि ते ॥ २८
ब्राह्मणस्त्वब्रवीद्वाक्यं कस्मिन्काले क्षणो भवेत् ।
ततोपदिष्टमिच्छामि यद्यत्कार्यान्तरं भवेत् ॥ २९

---

22 a) K1 D4 एतावान् ( for °वच् ). — d) K5 V1 B Da Dn D2. 3. 5. 6. 8 को; D7 S ( G3 missing ) किं ( for क्व ). K3 विशेषा. K1 भवेदिह; Da भविष्यति; M1. 3. 4 भवेत्कचित्.

23 D3 G2. 4 om. the ref. — a) K3 D4 विशेषो हि; Da श्रेयोप्यस्ति ( for विशेषोऽस्ति ). Ś1 K2 D1 महाभाग; D6 महीं स्नात ( for महांस्तात ). — B1 om. ( hapl. ) from भार्गवस्य up to महात्मनः ( in 26b ). — c) K3. 4. 5 V1 Bo. 2–4 D ( except D7 ) अत्र ( for तत्र ). B5 ( marg. ) भवभार्गवे. D1 [आ]गमये; D5 °मते ( for °मय ). D5 om. ( hapl. ) from भद्रं up to द्युतिः ( in 24d ). — d) K5 V1 Bo. 4. 5 Da Dn1 सुरर्षभ; B2. 3 Dn2 D2. 3. 6. 8 नरर्षभ; D1 पुनर्दर ( sic ); D7 S ( G3 missing ) सुरोत्तम ( for पुरंदर ).

24 B1 D5 om. 24 ( cf. v. l. 23 ). — a) D7 ततं ( for ततः ). — b) Da भार्गवान्; D1 भार्गव ( sic ); D7 T G1. 2. 4 भार्गवः. K2 T2 M1. 3. 4 स ( T2 तु ) महायशाः; K5 V1 B ( B1 om. ) Da Dn D2. 3. 6. 8 सु ( Da स ) महातपाः; D1 सुमहायशः; M2 °त्मनः ( for °यशाः ).

25 B1 om. 25 ( cf. v. l. 23 ). — b) Ś1 भार्गवेन. D1 महात्मनः. — c) D7 परं ( for पुनर् ). K3 D4 श्रेयः ( for भूयः ). — Da2 om. 25d–26a. — d) K3 D7 G1 M2 शक्रम् ( for शुक्रम् ). D7 T2 ( before corr. ) G1 M2 बृहस्पतिः; T1. 2 ( by corr. ) G2. 4 M1. 3. 4 शचीपतिः ( for शतक्रतुः ).

26 B1 om. 26ab ( cf. v. l. 23 ). Da2 om. 26a ( cf. v. l. 25 ). — a) D7 S ( G3 missing ) [अ]थ ( for [आ]ह ). K3. 5 V1 B ( B1 om. ) Da1 Dn D2–6. 8 सर्वज्ञः; G1 M2 धर्मज्ञ ( for °ज्ञः ). — b) Some MSS. प्रह्लादस्य. — d) All MSS. ( except Ś1 D1; G3 missing ) [इ]त्युक्तो ( for ततो ). B1 भवेत्.

27 a) D7 S ( G3 missing ) तत्र ( for ततो ). K1 Da1 ब्रह्मणो. — b) Some MSS. प्रह्लादं ( K1 प्रह्लादे ). Da1 D4 M2 पाकशासनं. — c) Ś1 K1. 2 D1 श्रुत्वा; K3–5 V1 B Da Dn D2. 3. 5. 6. 8 गत्वा; D4 स्तुत्वा; D7 S ( G3 missing ) स्तुत्वा ( for *सृत्वा ). Da चोवाच ( for प्रो° ). — d) D1 इच्छसि.

28 a) Some MSS. प्रह्लादस्. D5 वाक्यं ( for विप्रं ). — b) B1. 2 Da क्षणं; D1 क्षीणो; D8 क्षणे ( for क्षणो ). D7 S ( G3 missing ) द्विजोत्तम ( for द्विजर्षभ ). — c) K1 शक्तस्तु; G1 ( before corr. ) सिक्तस्य ( for स° ). K2–5 V1 B D ( except D1 ) T G1. 2. 4 त्रैलोक्यराज्यस( B1 D6 °श )क्तस्य. — d) V1 B1. 2 Da तेन ( for ततो ). K1 ह ( for ते ). K4 ततोन्होयदिशामि ते ( sic ).

29 a) K4. 5 V1 B Da Dn D2. 3. 5. 6. 8 राजन्; G2 नित्यं ( for वाक्यं ). — b) K1 तस्मिन्; K3–5 V1 B Da Dn D2. 4. 6. 8 S ( G3 missing ) यस्मिन् ( for कस्मिन् ). — c) K1–3 Dn1 D1. 4. 6 T2 G1 M4 तदा; K4. 5 V1 B1–5 Da Dn2 D2. 3. 5. 8 T1 G2. 4 तत्र ( for ततः ). K1 [उ]पदिष्टुम्; Dn1 D6 T2 [उ]पादेष्टुम्; D7 [उ]पदेशम्; T1 G1. 2. 4 M4 °देष्टुम् ( for °दिष्टम् ). — d) K3 D4 यदा; D7 S ( G3 missing ) यदि ( for यद्यत् ). K4. 5 V1 B Da Dn D2. 3. 5. 6. 8 यदाचार्य- ( K4. 5 Dn D2. 3. 6. 8 यदाचार्यं; V1 Da °श्रर्यं; B1 यदा कार्यं )मनंतरं ( Dn °मनुत्तमं ).

30 b) Some MSS. प्रह्लादो. K1 ब्रह्मवादने; K3–5 V1 B Da Dn D2–6. 8 °दिनः ( for °दिने ). — c) D7

ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिने ।
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ॥ ३०
ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्वत्स मनसेच्छति ॥ ३१
पृष्टश्च तेन बहुशः प्राप्तं कथमरिंदम ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ॥ ३२

प्रह्लाद उवाच ।

नासूयामि द्विजश्रेष्ठ राजास्मीति कदाचन ।
कव्यानि वदतां तात संयच्छामि वहामि च ॥ ३३
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
ते मा कव्यपदे सक्तं शुश्रूषुमनसूयकम् ॥ ३४
धर्मात्मानं जितक्रोधं संयतं संयतेन्द्रियम् ।
समाचिन्वन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ३५
सोऽहं वागग्रपिष्टानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३६
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।

C. 12. 4587
B. 12. 124. 38
K. 12. 124. 38

---

S (G3 missing) ददौ (for शुभे). — d) D1 ज्ञानतत्त्वे. D7 S (G3 missing) द्विजे (for ददौ). T2 तथा (for तदा).

31 a) Da ब्राह्मणेषु (for °णोऽपि). D4 तथा (for यथा-). Ś1 D1 यथान्याय्यं. — b) B1. 2 गुरुवृत्तम्. B1. 2 Da D1 अनुत्तमं. — d) K3. 5 V1 B Da1 Dn2 D2. 3. 5. 6 M यद्यत्स; K4 Dn1 यदस्य; D4 यद्यत्स्व-; D7 T G1. 2. 4 यद्यच्च; D8 यद्वच्छ (for यद्वत्स). B3 D1. 8 [इ]च्छसि; Dn D4 [ई]प्सितं (for [इ]च्छति).

32 a) B1 पृष्टं च. Ś1 D1 शतशः (for बहुशः). — b) D7 T2 G1 M2 प्राप्तः. Dn2 अनुत्तमं; D1 अरिंदमं; M4 अरिंदमं (for °दम). — c) G1 त्रैलोक्यराजन्. — d) M2 ब्रवीमि ते (for °हि मे). — After 32, K4. 5 V1 (marg.) Bo. 2–5 Da Dn D2. 3. 5. 6. 8 ins.:

287* प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् ।

[ Some MSS. प्रह्लादो. B4 हि (for [ऽ]पि). K4 B4 Da D8 महातेजा (for °राज). ]

33 D8 om. the ref. K1 काव्य उवाच; some MSS. प्रह्लाद उवाच. — a) Ś1 K1. 2 नाश्रयामि; D1 न श्र° (for नासू°). K3–5 V1 B D (except D1) S (G3 missing) द्विजाग्निप्र (for द्विजश्रेष्ठ). — b) D6 न वा (for राजा). K3 D4. 7 S (G3 missing) कथंचन (for कदा°). — c) K1 D7 S (G3 missing) काम्यानि; K2–5 V1 B Da Dn1 D2. 3. 5. 6. 8 Cn काव्यानि; Dn2 D4 वाक्यानि (for कव्यानि). Ś1 K2 D1 हव्यतां; K1 वहतां (for वदतां). K3–5 V1 B2–5 D (except D1. 7) T2 G2 M2 तेषां; B1 श्रेष्ठ (for तात). — d) D1. 4 स यच्छामि (sic). K3 D1 सहामि; V1 वदामि; D7 वहंति (for वहामि).

34 a) K3. 4 V1 Bo–2. 5 Da Dn D2. 4. 6. 8 विश्रब्धाः (D2 °ब्धः); D1 विस्तब्धाः (for विस्रब्धाः). — b) Dn1 D2. 3. 8 संयच्छामि (for °च्छन्ति). Dn1 [इ]ति (for च). K5 Bo. 3–5 D2. 8 ते (for मां). — c) K1. 3–5 Bo. 3–5 Da Dn D2–6 ते मां; V1 B1. 2 D7 S (G3 missing) तेषां (for ते मा). K1 काव्यपदे; K3–5 V1 B Da Dn D2. 3. 5. 6. 8 काव्यपथे; D7 T G1. 2. 4 M1. 3. 4 कार्यपथे (for कव्यपदे). K3–5 Bo. 2–5 Da Dn D2. 3. 5. 6. 8 युक्तं; V1 B1 सूक्तं (for सक्तं). — d) Ś1 (before corr.) D1 शुश्रूषुर्. D4 अनुसूयकं; D7 S (G3 missing) अनहंकृतं (for अनसूयकम्).

35 a) D1 जितं क्रोधं. — b) K5 B1 om. (hapl.) संयतं. K1. 3. 4 V1 Bo. 2–5 Da Dn D2–8 S (G3 missing) नियतं (for सं°). K5 D4 नियतेंद्रियं; Bo संयतेंद्रियः. — c) K1 समाविधंति; K2. 5 V1 B Da Dn D2. 3. 5. 7 S (G3 missing) °सिंचंति; K3 °विशति; K4 D8 ते मां सिंचंति; D1 समाचिंचंति; D4 °विचंति; D6 °सिंचति (for °चिन्वन्ति). D7 S (G3 missing) शास्त्रज्ञाः (for शास्तारः). — d) D6 मध्विव; D8 अधिच (for मध्विव). Ś1 Dn2 M2 माक्षिकाः; Da1 मक्षिकां (for मक्षिकाः).

36 a) K3–5 V1 Bo. 3–5 Dn D2. 3. 5. 6. 8 Cn सोहं वागग्रविद्यानां; B1. 2 सोहं रागं (B2 वाचा) प्रविष्टानां; Da सोहं वागग्रमिष्टानां; D4 सोहं चाग्रे सपिष्टानां; D7 सोहं वाग्रसपुष्टानां; T G1. 2. 4 सोहं वागन्यपुष्टानां; M सोहं वागभ्यस्त (M2 °पृ°) ष्टानां. ❀ Cn: वागग्रविद्यानां वागग्रे एव न तु पुस्तके विद्या येषां तेषाम् । ❀ — b) K5 B1 Dn2 D2. 8 अवलोहिता; D1 °लोहिताः; D4 °लेहिताः. D7 S (G3 missing) मधूनां परिलेहिता (D7 °लोहिताः; T2 °लोभिता). — c) G1 स्वजात्या न हि तिष्ठामि.

37 a) M2 अतः (for एतत्). D8 एतन्मे (for अमृतम्). — b) K4 D8 अनुत्तमां; V1 B1. 2 Da निदर्शनं

यद्ब्राह्मणमुखे कव्यमेतच्छ्रुत्वा प्रवर्तते ॥ ३७

धृतराष्ट्र उवाच ।

एतावच्छ्रेय इत्याह प्रह्रादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३८
यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ॥ ३९
कृतमित्येव दैत्येन्द्रमुवाच स च वै द्विजः ।
प्रह्रादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ॥ ४०

ब्राह्मण उवाच ।

यदि राजन्प्रसन्नस्त्वं मम चेच्छसि चेद्धितम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४१

धृतराष्ट्र उवाच ।

ततः प्रीतश्च दैत्येन्द्रो भयं चास्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पतेजायमित्युत ॥ ४२
एवमस्त्विति तं प्राह प्रह्रादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ४३
दत्ते वरे गते विप्रे चिन्तासीन्महती ततः ।
प्रह्रादस्य महाराज निश्चयं न च जग्मिवान् ॥ ४४
तस्य चिन्तयतस्तात छायाभूतं महाद्युते ।
तेजो विग्रहवत्तात शरीरमजहात्तदा ॥ ४५
तमपृच्छन्महाकायं प्रह्रादः को भवानिति ।
प्रत्याह ननु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ४६

---

(for अनुत्तमम्). — c) D1 ब्राह्मणे. K3 D4 -मुखात्. K1. 3-5 V1 B Da Dn D1-6. 8 काव्यम्; D7 S (G3 missing) हव्यम् (for कव्यम्). — d) K4 कृत्वा (for श्रुत्वा). V1 B1. 2 (marg. as in text) प्रवर्तय; D4 °र्तत.

38 MSS. om. the ref. — a) T2 यथावच् (for एता°). — b) Some MSS. प्रह्लादो; T2 प्रह्लादो. Ś1 K1. 2 D1 धर्मवादिनं (K1 °नां); K3 D4 ब्रह्मवादिनां. — Da1 om. 38cd. — c) K1 D4 शुश्रूषितास; D1 °षेन; T2 G1 °षया; M4 °षतस्. D5 G2 M2. 4 सदा (for तदा). — d) K1 दैत्येंद्रे.

39 a) K4 V1 B1. 3. 4 D2. 3. 5. 8 तु (for ते). — c) D4 वृणीय (for °ष्व).

40 a) K2 कृत्यमित्येव; M1 कृतकृत्येव. — b) K4 B0. 3. 5 Dn2 D3. 5. 6. 8 [अ]थ स (for स च). D7 S (G3 missing) उवाच द्विजसत्तमः. — c) Some MSS. प्रह्लादस; T2 प्रह्लादस. K3 प्रह्लादमब्रवीत्प्रीतो. — d) Da वरम्; M1 वद (for वर).

41 D3 om. the ref. V1 reads 41-42 on marg. — b) K1. 3 V1 B Da D4 यद्धितं; D3 सिद्धितं (for चे°). K5 Dn D2. 3. 5. 6 मम चेदिच्छसि प्रियं; D7 S (G3 missing) ममेच्छासि च यद्धितं. — c) D3 शीघ्रम् (for शीलम्). — d) Ś1 K2 D1 प्राप्त (for प्राप्तुम्). D7 G1 वरोत्तमं (for वरो मम). Ś1 K2. 4 मया (for मम).

42 Some MSS. om. the ref. V1 reads 42 on marg. — a) K1-3. 5 V1 B Da Dn D2-6. 8 तु; D7 S (G3 missing) स (for च). — b) Dn1 D3. 5 अस्य (for चास्य). — c) K3 वरं (for वरे). T2 G1. 2 प्रविष्टे (for प्रदिष्टे). M2 विप्रस्य (for विप्रेण). — d) Ś1 K1 D4 [अ]ल्पतेजोयम्; T2 G1. 2 M °चेतायम्; Cn °तेजायम् (as in text).

43 D1 om. 43. — a) K2. 5 V1 B Da Dn D2. 3. 5. 6. 8 स (for तं). — b) Some MSS. प्रह्लादो; T2 प्रह्लादो. — c) Ś1 K1 D4 उपकृत्य; B1. 2 D2. 6. 8 उपाहृत्य; D7 अवाकृत्य; T G1. 2 M1. 3. 4 अपा° (for उपा°). T2 G1 M च (for तु). — d) D4 वर-; D7 G1 परं (for वरं). D6 महत्; M1 भवेत् (for ऽभवत्).

44 a) M4 गते वरे (by transp.). — b) K5 V1 B D (except D1) T2 G1 तदा (for ततः). — c) Some MSS. प्रह्लादस्य; Da1 D2. 6. 7 T1 G4 प्रह्लादश्च (T1 G4 °स्तु). — d) Dn2 निश्चये. K3 नावजग्मिवान्; D2 तव ज° (for न च ज°).

45 a) Dn तावच् (for तात). — V1 reads 45bc on marg. — b) K3 B1-4 Da D4. 8 महाद्युति; K5 Dn D2. 3 5. 6 °द्युतिं; B5 D7 G1 M1. 3 °द्युतेः (for °द्युते). — c) Ś1 K4 तत्र (for तात). — d) Ś1 अजहत्; M2 अभजत् (for अजहात्). G1 ततः (for तदा).

46 a) D2 महाकाय; D7 °राजा; T G2. 4 °राज; G1 °राजः (for °कायं). — b) Some MSS. प्रह्लादः. — c) K5 Dn तं तु; D4. 7 T G1. 4 M तव (for

तस्मिन्द्विजवरे राजन्वत्स्याम्यहमनिन्दितम् ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ।
इत्युक्त्वान्तर्हितं तद्वै शक्रं चान्वविशत्प्रभो ॥ ४७
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ।
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ॥ ४८
धर्मं प्रह्राद मां विद्धि यत्रासौ द्विजसत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥ ४९
ततोऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्रादस्य महात्मनः ॥ ५०
को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यमस्म्यसुरेन्द्राग्र्य यास्येऽहं धर्ममन्विह ॥ ५१
तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात्पृष्टश्चाह महात्मना ।
वृत्तं प्रह्राद मां विद्धि यतः सत्यं ततो ह्यहम् ॥ ५२
तस्मिन्गते महाश्वेतः शरीरात्तस्य निर्ययौ ।
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ।
इत्युक्त्वा च ययौ तत्र यतो वृत्तं नराधिप ॥ ५३
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ।

C. 12. 4605
B. 12. 124. 56
K. 12. 124. 56

---

नतु ). —$^{d}$ ) M2 त्यक्त्वा ( for त्यक्तो ).

47 Da2 om. $47^{ab}$. —$^{a}$ ) D2 यस्मिन् ( for त° ). K1. 3. 5 V1 Bo. 2–5 Da1 Dn D2–8 S ( G3 missing ) द्विजोत्तमे ; B1 तेजोत्तमे ( for द्विजवरे ). —$^{b}$ ) Ś1 ( *sup. lin.* ) K5 वसामि ; Ś1 ( *inf. lin.* ) K1 वदामि ( for वत्स्यामि ). K3–5 V1 B Da1 Dn D2. 3–6. 8 M अनिंदिते ( D4 °मः ; M1–3 °तः ) ; D7 T G1. 2. 4 अरिंदम ( for अनिन्दितम् ). D1 corrupt. — D8 om. $47^{c}$–$47^{f}$. —$^{d}$ ) D7 S ( G3 missing ) तव ( for त्वयि ). D7 ( before corr. ) समाहितं. — D4 erroneously reads $47^{ef}$ twice followed by the repetition of $47^{cd}$. —$^{e}$ ) M4 [अं]तर्हितस्. K3 तत्तु ; D4 ( second time ) तं तु ; G2 चैव ( for तद्वै ). D7 T2 G1 इत्युक्त्वा धैर्यसहितः ( D7 °तं ). —$^{f}$ ) D2 वा ( for च ). K1 श्चावाशिवत् ( sic ) ; K3 Da Dn1 D4 ( both times ) M [अ]न्वाविशत् ; K5 V1 Bo. 4. 5 Dn2 D2. 3. 5. 6 [अ]नु° ; B1 [अ]न्य° ; B2 [अ]भ्या° ; D7 T G1. 2. 4 [ए]वा° ( for [अ]न्व° ).

48 $^{a}$ ) D4 गते ; D8 जाते ( for याते ). —$^{b}$ ) K5 Dn2 -भूतस् ; G1 -शापस् ; G2 M2 -रूपं ( for -रूपस् ). V1 D7 T2 M तथा ( for ततो ). — D8 om. ( hapl. ) $48^{c}$–$50^{b}$. —$^{c}$ ) M2 निःसृतं. T2 तं च ( for तस्य ). — D7 om. ( hapl. ) $48^{d}$–$50^{c}$. V1 reads $48^{d}$–$50^{c}$ on marg. —$^{d}$ ) T1 G1. 2. 4 सो ( for च ).

49 D7. 8 om. 49 ( cf. v. l. 48 ). V1 reads 49 on marg. —$^{a}$ ) D1 M1. 3 धर्मः. Some MSS. प्रह्लाद. —$^{b}$ ) S ( G3 missing ) यत्र चासौ ( T2 G1 °सि ) द्विजोत्तमः. — K8 om. $49^{c}$–$50^{b}$. —$^{c}$ ) G1 यत्र ( for तत्र ). —$^{d}$ ) K2. 4 यस्य ( for यतः ). B1 Da शीलस् ( for °लं ). T G1. 2. 4 M वयं ( for ह्यहम् ). Ś1 K2. 4 यत्र शीलस्य संस्थितिः.

50 K3 D8 om. $50^{ab}$ ; D7 om. $50^{abc}$ ( cf. v. l. 49, 48 ). V1 reads $50^{abc}$ on marg. —$^{a}$ ) D4 T1 G1. 4 परो ( for ऽपरो ). G2 महातेजा ( for °राज ). —$^{b}$ ) T1 G4 तेजसा प्रज्वलन्निव ( by transp. ). —$^{c}$ ) K4 D1 निःस्मृतस् ; T1 निर्गतस् ( for निःसृतस् ). —$^{d}$ ) Some MSS. प्रह्लादस्य.

51 $^{a}$ ) K4 पृष्टस्य ( for °श्च ). —$^{c}$ ) D1 om. ( hapl. ) from मस्म्यसु up to तस्मि ( in $52^{a}$ ). Dn विद्धि ; D8 G1 असि ( for अस्मि ). Ś1 K2 D1 अस्मि महाराज ; K1 Da1 Dn1 D4. 6. 8 असुरेन्द्राद्य ( D4 °द्राय ; D6. 8 °द्राइय ) ( for °द्राग्र्य ). —$^{d}$ ) K1 D4 यास्स्यहं ; K2. 4 यास्ये ह ; K3 Dn2 प्रयास्ये ; D8 यास्येयं ( for यास्येऽहं ). K3 Da1 D2 T1 G2. 4 अन्वितः ; Dn अन्वहं ; D5 अस्त्वहं ( for अन्विह ).

52 D1 om. तस्मि ( cf. v. l. 51 ). —$^{a}$ ) K2 D4 G2 यस्मिन् ( for त° ). D1 अपगते ( for अनु° ). Da2 धर्मः ; Dn सत्ये ; D2. 3. 5. 6 M2 धर्मे ( for धर्मं ). —$^{b}$ ) Dn महान्वै ( for पुरुषे ). —$^{c}$ ) D7 S ( G3 missing ) पश्चात् ( for तस्मात् ). —$^{d}$ ) Ś1 K4 D1 पृष्ठतश्च ; K1 पृष्ट्वाश्चाहं ( sic ) ( for पृष्टश्चाह ). Ś1 K2–4 Bo. 5 ( marg. as in text ) D1 महात्मनः ; V1 B1 Da Dn °बलः ; D4 °त्मनाः ; D7 T G1. 4 M °तपाः ; G2 °द्युतिः ( for °त्मना ). —$^{e}$ ) Ś1 K1. 4 D1 वित्तं ; Da वृत्तिं ( for वृत्तं ). Some MSS. प्रह्लाद. —$^{f}$ ) D7 G1 अतो ह्यहं ; T1 G2. 4 ततोऽस्म्यहं.

53 $^{a}$ ) K2 D1. 7 G1 महाश्वेता ; K3 M महाञ्छ्वेतः ; K4. 5 V1 B Da Dn D2. 3. 5. 6. 8 महा( V1 B1 °हान् )-शब्दः ; T2 महत्तेजः ( for महाश्वेतः ). — Ś1 K1–3 D1

तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येवमब्रवीत् ॥ ५४
उषितास्मि सुखं वीर त्वयि सत्यपराक्रमे ।
त्वया त्यक्ता गमिष्यामि बलं यत्र ततो ह्यहम् ॥ ५५
ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः ।
अपृच्छत च तां भूयः क्व यासि कमलालये ॥ ५६
त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ ५७

श्रीरुवाच ।

स शक्रो ब्रह्मचारी च यस्त्वया चोपशिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥ ५८
शीलेन हि त्वया लोकाः सर्वे धर्मज्ञ निर्जिताः ।
तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ॥ ५९
धर्मः सत्यं तथा वृत्तं बलं चैव तथा ह्यहम् ।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥ ६०

भीष्म उवाच ।

एवमुक्त्वा गता तु श्रीस्ते च सर्वे युधिष्ठिर ।
दुर्योधनस्तु पितरं भूय एवाब्रवीदिदम् ॥ ६१
शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन ।

om. (hapl.) $53^{c}$–$54^{b}$. — $^{c}$) $M_2$ [अ]हं (for [आ]ह). — $^{d}$) $D_{2.8}$ $G_1$ यत्तो (for यतो). $K_5$ $T_1$ $G_{2.4}$ ततो-स्म्य( $K_5$ °तो ह्य )हं (for अहं ततः). — $^{e}$) $B_{3.4}$ Dn $D_{3.5.7}$ T $G_{1.2.4}$ प्रययौ; $M_4$ [अ]नुययौ (for च ययौ). — $^{f}$) Da वृद्धं (for वृत्तं). $B_1$ Da नराधिपः; $D_8$ °पं.

54 $Ś_1$ $K_{1-3}$ $D_1$ om. $54^{ab}$ (cf. v. l. 53). — $^{a}$) $V_1$ $B_{1.2}$ Da पद्मालया (for प्रभामयी). — Da om. $54^{cd}$. — $^{c}$) $M_{3.4}$ अपृच्छत (for °च्छत्स). — $^{d}$) $K_{4.5}$ $B_{0.4.5}$ Dn $D_{2.3.5}$ एनम् (for एवम्).

55 $^{a}$) $K_1$ इषितास्मि (for उ°). $B_1$ Dn स्वयं (for सुखं). $T_2$ $G_{1.2}$ M नित्यं (for वीर). — $^{b}$) $K_{2.3.5}$ $V_1$ B D (except $D_1$) S ($G_3$ missing) -पराक्रम ( $B_1$ $M_2$ °मः; $D_8$ °मं). — $^{c}$) $B_{0.3-5}$ $D_{2.3.5.6.8}$ त्यक्ता त्वया (by transp.). — $^{d}$) $Ś_1$ $K_{1.2.4}$ $D_1$ यतो वित्तं; $D_{5.6}$ बलं तत्र. $K_3$ बलवतो; $V_1$ $B_{1.2}$ Da Dn ह्यनुगता (for यत्र ततो). $K_1$ om. ततो. $T_1$ $G_{2.4}$ [ऽ]स्म्यहं; $M_{1.3.4}$ [ऽ]प्यहं (for ह्यहम्).

56 $^{a}$) M प्रादुरभूत् (for °रासीत्). — $^{b}$) Some MSS. प्रह्लादस्य. — $^{c}$) $T_2$ स (for च). $K_5$ $V_1$ B Da Dn $D_{2-6.8}$ अपृच्छत्स ततो ( $V_1$ °त्स तदा; $D_4$ °च्च स तां) भूयः. — $^{d}$) $M_4$ कमलासने (for °लये).

57 $^{a}$) $M_{1.3}$ त्वं सि (sic) (for त्वं हि). $V_1$ $B_{0.2.3}$ $D_{1.4}$ $G_1$ देवि. $K_5$ $D_{2.3.5.6}$ सत्यव्रता त्वं हि देवि ( $D_{3.5}$ °वी). — $^{c}$) $M_2$ कस्य (for कश्च). $D_4$ ब्राह्मणोदवित् (sic) (for °णश्रेष्ठस्). — $^{d}$) $K_1$ तत्त्व (for तत्त्वम्).

58 $D_8$ $G_{1.2.4}$ om. the ref. $D_5$ श्रीदेव्युवाच. — $^{a}$) $Dn_2$ $D_8$ शक्तो; $M_2$ चक्रो (for शक्रो). $K_{1.3}$ $Dn_1$ M यस; $B_5$ $T_1$ [इ]व (for च). — $^{b}$) $K_1$ त्वत्तस्यैव; $K_{3.5}$ $V_1$ B Da Dn $D_{2-8}$ T $G_{2.4}$ $M_{1-3}$ त्वत्तश्चैव; $G_1$ ततश्चैव; $M_4$ त्यक्तश्चैव (for यस्त्वया च). — $^{c}$) $B_2$ $M_2$ ये तद् (for ते यद्). — $^{d}$) $D_7$ T $G_{1.2.4}$ $M_{1.3.4}$ तेन तत्ते (for तत्तेनाप-). $M_{1.3}$ वृतं (for -हृतं). $G_2$ त्वया (for प्रभो). $D_4$ तत्तेजोपहृतं प्रभो.

59 $K_3$ om. (hapl.) 59. $Ś_1$ reads 59 on marg. — $^{a}$) $D_4$ शीले सति (for शीलेन हि). $K_{1.5}$ $V_1$ B Da Dn $D_{2-6.8}$ $T_1$ $G_{2.4}$ M त्रयो (for त्वया). $D_7$ शीलेन तेन लोकाश्च; $T_2$ $G_1$ शीलेन लोका वै राजंस्. — $^{b}$) $K_{1.5}$ $V_1$ B Da Dn $D_{2-8}$ S ($G_3$ missing) त्वया (for सर्वे). $G_2$ निश्चिताः (for निर्जिताः). — $^{c}$) $B_4$ Dn $D_{3.5}$ सुरेंद्रेण (for महेन्द्रेण). — $^{d}$) $D_4$ शीले. $K_1$ $D_6$ हितं (for हृतं).

60 $^{a}$) $B_1$ धर्मं. $Ś_1$ $K_4$ वित्तं (for वृत्तं). — $^{b}$) K $V_1$ $B_{0-4}$ D (except $D_1$) $T_1$ $G_{1.2.4}$ $M_4$ [अ]पि (for हि). — $^{c}$) $D_1$ शीलं. $G_1$ -मूलं. $B_{0.2-5}$ $D_{2.3.5.6}$ महाप्रज्ञ; $Da_1$ °प्राज्ञस्; $D_7$ S ($G_3$ missing) °राज (for °प्राज्ञ). — $^{d}$) $Da_1$ तदा; $D_7$ S ($G_3$ missing) तथा (for सदा).

61 $D_{7.8}$ $G_1$ om. the ref. — $^{a}$) $Dn_2$ एकम् (for एवम्). $K_{1.3.5}$ $V_1$ B D (except $D_1$) S ($G_3$ missing) श्रीस्तु (by transp.). — $^{d}$) Dn $D_6$ वचः; $D_7$ S ($G_3$ missing) तदा (for इदम्).

62 $^{a}$) $D_{3.5}$ चेच्छामि (for इच्छामि). $D_7$ T $G_{1.2.4}$ $M_{1-3}$ शीलं समधिगच्छामि; $M_4$ शीलं तत्सम्यगिच्छामि. — $^{b}$) $Ś_1$ $K_{1.4}$ $D_1$ वक्तुं; $D_4$ चेत्तुं (for वेत्तुं). $Da_1$ $D_6$ $M_2$ कौरवनंदनः ( $D_6$ °नं). — $^{c}$) Da न (for च). $B_0$ $D_1$ तथा; $T_2$ कथं (for यथा). — $^{d}$) $K_{1-3}$ $V_1$ $B_{1.2}$ Da Dn $D_{2.6-8}$ T $G_4$ $M_{1.3.4}$ तं

प्राप्यते च यथा शीलं तमुपायं वदस्व मे ॥ ६२
धृतराष्ट्र उवाच ।
सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना ।
संक्षेपतस्तु शीलस्य शृणु प्राप्तिं नराधिप ॥ ६३
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥ ६४
यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ॥ ६५
तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि ।
एतच्छीलं समासेन कथितं कुरुसत्तम ॥ ६६
यद्यप्यशीला नृपते प्राप्नुवन्ति क्वचिच्छ्रियम् ।
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ॥ ६७
एतद्विदित्वा तत्त्वेन शीलवान्भव पुत्रक ।
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ॥ ६८
भीष्म उवाच ।
एतत्कथितवान्पुत्रे धृतराष्ट्रो नराधिप ।
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलम् ॥ ६९

C. 12. 4621
B. 12. 124. 71
K. 12. 124. 71

इति श्रीमहाभारते शान्तिपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

सोपायं; K5 Bo. 3–5 D3–5 G2 तथो°; G1 M2 तचो° (for तमु°). D7 S (G3 missing) ब्रवीहि; D8 दरस्व (sic) (for वदस्व).

63 D8 om. the ref. — a) T G4 सोपायः; G2 उपायः. Ś1 K1. 2 सर्वम् (for पूर्वम्). Da निर्दिष्टं; T G2. 4 उद्दिष्टः (for उद्दिष्टं). — b) Some MSS. प्रह्लादेन. D1 M3 महात्मनः. — c) K3 संक्षेपात्तस्य; K5 Bo. 3–5 D2. 3. 5. 8 °पेण च; V1 B1. 2 Da Dn D6 °पेण तु (for °पतस्तु). K3 om. from शीलस्य up to प्रशस्यते (in 64d). — d) K4 प्राप्ते; T1 G1 प्राप्तं (for प्राप्तिं). Dn नरेश्वर; D7 T G1. 2. 4 M1–3 जनाधिप; M4 जनेश्वर (for नराधिप).

64 K3 om. 64 (cf. v. l. 63). — c) B1 अनुग्रहं. — d) V1 वदंति हि; D4 प्रचक्षते (for प्रशस्यते).

65 a) K1 हिते (for हितं). — c) D7 T G1. 2. 4 पापेन (for वा येन). K1 (marg. by corr.) अपि त्रपेत वाक्येन.

66 a) K1 D4 तत्तत्; T G2. 4 कर्ता; G1 तत्तु (for तत्तु). K1 यथा (for तथा). — b) K2–5 V1 Bo. 2–5 Da Dn D2–6. 8 G1 श्लाघ्येत; G2 श्लाघेत्तु. — c) K4 शीले. K1. 3. 5 V1 B D (except D1) S (G3 missing) शीलं (G1 शिवं) समासेनैतत्ते (K5 °त्तु).

67 a) G1 यदल्पशीला; M2 यदस्य शीलां. — b) K1. 3. 5 V1 B D (except D1) S (G3 missing) श्रियं क्वचित् (by transp.). — c) D4 संजते; M1 भुंजेत (for भुञ्जते). Ś1 K1. 2 D1 श्रियं; G2 चिरात् (for चिरं). — Ś1 reads 67d–68c on marg. — d) K4 D1 समूलाच्; M1 सर्वमूलाश्च (hypermetric) (for समूलाश्च). Ś1 (*sup. lin.* as in text; *inf. lin.*) भवंति; K5 V1 B Da Dn D2. 3. 5. 6. 8 न संति (for पतन्ति).

68 Before 68, K5 V1 B Da Dn D2. 3. 5. 6 ins. धृतराष्ट्र उवाच. Ś1 reads 68abc on marg. — a) D6 एवं (for एतद्). — c) T2 G1 M4 यदिच्छसि. — d) K1 सुविचित्रां; D6 सुविशिष्टो; M2 सविशिष्टां (for सु°). T2 G1 युधिष्ठिरे. — After 68, Ś1 K1. 2 D1 ins.:

288* जिता सभा शास्त्रवता समासा[? °मस्या] गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ।

[ = (var.) 5. 34. 45. — (L. 1) K1. 2 वस्त्रवता (for शास्त्र°). K1 समांसा. — (L. 2) Ś1 जिता; D1 जितौ (for जितो). K1 सर्वे. ]

On the other hand, D7 T G1. 2. 4 M ins. after 68:

289* अधिकां वापि राजेन्द्र ततस्त्वं शीलवान्भव ।

[ G1 यापि; G2. 4 अपि (for वापि). G1 संशीलवान् (for त्वं शी°). ]

69 M om. 69ab. D4 om. the ref. — a) D6 G2 पुत्र (for पुत्रे). — b) K V1 Bo. 2–4 Da2 Dn D2. 3. 5. 6. 8 नराधिपः; D7 T G1. 2. 4 महीपतिः (for नराधिप). — c) K5 D2. 3. 5. 6. 8 G2 राजेंद्र (for कौन्तेय). — d) V1 Bo यतः; M4 तत्त्वं (for ततः). G1 प्राप्स्यथ (for °सि). D7 T G1. 2. 4 यत्फलं; M1, 3. 4 यद्फलं (for तत्फलम्).

ब्रह्मघ्नान्ब्राह्मणान्राजा कृताङ्कान्विप्रवासयेत् ।
विकलेन्द्रियांस्त्रिवर्णांश्च चण्डालैः सह वासयेत् ।
तैश्च यः संपिबेत्कश्चित्स पिबन्ब्रह्महा भवेत् ।
प्रेतानां न च देयानि पिण्डदानानि केनचित् । [ 50 ]
कृष्णवर्णा विरूपा च निर्णीता लम्बमूर्धजा ।
दुनोत्यदृष्टा कर्तारं ब्रह्महत्येति तां विदुः ।
ब्रह्मघ्नेन पिबन्तश्च विप्रा देशाः पुराणि च ।
अचिरादेव पीड्यन्ते दुर्भिक्षव्याधितस्करैः ।
ब्राह्मणं पापकर्माणं विप्राणामाततायिनम् । [ 55 ]
क्षत्रियं वैश्यशूद्रौ च नेत्रोद्धारेण योजयेत् ।
दुर्बलानां बलं राजा बलिनो ये च साधवः ।
बलिनां दुर्बलानां च पापानां मृत्युरिष्यते ।
सदोषमपि यो हन्यादश्राव्य जगतीपतेः ।
दुर्बलं बलवन्तं वा स पराजयमर्हति । [ 60 ]
राजाज्ञां प्राड्विवाकं च नेच्छेद्यश्चापि निष्पतेत् ।
साक्षिणं साधुवाक्यं च जितं तमपि निर्दिशेत् ।
बन्धनान्निष्पतेद्यश्च प्रतिभूर्न ददाति च ।
कुलजश्च धनाढ्यश्च स पराजयमर्हति ।
राजाज्ञया समाहूतो यो न गच्छेत्सभां नरः । [ 65 ]
बलवन्तमुपाश्रित्य सायुधः स पराजितः ।
तं दण्डेन विनिर्जित्य महासाहसिकं नरम् ।
वियुक्तदेहसर्वस्वं परलोकं विसर्जयेत् ।
मृतस्यापि न देयानि पिण्डदानानि केनचित् ।
दत्वा दण्डं प्रयच्छेत मध्यमं पूर्वसाहसम् । [ 70 ]
कुलस्त्रीव्यभिचारं च राष्ट्रस्य च विमर्दनम् ।
ब्रह्महत्यां च चौर्यं च राजद्रोहं च पञ्चमम् ।
महान्ति पातकान्याहुर्ऋषयः पातकानि ह ।
युद्धादन्यत्र हिंसायां सुरापस्य च कीर्तने ।
महान्तं गुरुतल्पे च मित्रद्रोहे च पातकम् । [ 75 ]
न कथंचिदुपेक्षेत महासाहसिकं नरम् ।
सर्वस्वमपहृत्याशु ततः प्राणैर्वियोजयेत् ।
त्रिषु वर्णेषु यो दण्डः प्रणीतो ब्रह्मणा पुरा ।
महासाहसिकं विप्रं कृताङ्कं विप्रवासयेत् ।
साहस्रो वा भवेद्दण्डः काञ्चनो देहनिष्क्रयः । [ 80 ]
चतुर्णामेव वर्णानामेवमाहोशनाः कविः ।
नारीणां बालवृद्धानां गोः पाते च महामतिः ।
पापानां दुर्विनीतानां प्राणान्तं च बृहस्पतिः ।
दण्डमाह महाभाग सर्वेषां चाततायिनाम् ।
सर्वेषां पापबुद्धीनां पापं कर्मेह कुर्वताम् । [ 85 ]
धृतराष्ट्रस्य पुत्राणां दण्डो निर्दोष इष्यते ।
सौबलस्य च दुर्बुद्धेः कर्णस्य च दुरात्मनः ।
पश्यतां चैव शूराणां याहं द्यूते सभां तदा ।
रजस्वला समानीता भवतां पश्यतां नृप ।
वाससैकेन संवीता भवद्दोषेण भूपते । [ 90 ]
मा भूद्धर्मविलोपस्ते धृतराष्ट्रकुलक्षयात् ।
क्रोधाग्निना तु दग्धं च सपशुद्रव्यसंचयम् ।

---

$G_1$ $M_2$ ब्राह्मणं ( for ब्रह्मघ्नं ). $G_2$ नोत्तमं. — ( L. 44 ) $G_1$ शूद्रस्यैव. — ( L. 45 ) $D_7$ तु प्रसादयेत्; $G_1$ तु विवासयेत्; $G_2$ विप्रवा° ( for तु प्रवा° ). — ( L. 46 ) $G_2$ वैश्यशूद्राणां; $G_3$ °शूद्रांश्च. $T_2$ च ( for वा ). $T_1$ कारयेत्; $G_2$ $M_{1-3}$ पातयेत् ( for घात° ). — ( L. 47 ) $G_1$ M ब्रह्मघ्नं ब्राह्मणं राजा ( for the prior half ). $G_1$ M कृतांकं ( for °कान् ). — ( L. 48 ) Prior half hypermetric. $D_7$ $G_1$ त्रीन्वर्णांश्च; M तु त्रीन्वर्णांश्. — ( L. 49 ) $G_{2-4}$ संपिबन्. — ( L. 50 ) $D_7$ $G_{3.4}$ प्रेतान्नं; $M_{1.3.4}$ मृतानां. — ( L. 51 ) $D_7$ कृष्णायसातपत्रं च; M कृष्णवर्णा स्व( $M_2$ स )रूपा च; Cv कृष्णवर्णा असुरूपा ( for the prior half ). $D_7$ निर्णया; $T_1$ $G_3$ निर्नीता; $T_2$ निर्णताल्ऌ; $G_1$ निर्णयाल्ऌ; $G_2$ निर्णदा; $M_{1.3}$ निर्दष्ना; $M_{2.4}$ निर्नष्ना; Cv नर्मघ्ना ( for निर्णीता ). — ( L. 52 ) $D_7$ दुनोमि ( for °ति ). $T_2$ M [अ]दृष्ट्वा ( $M_2$ °दुष्टा ); Cv [अ]दृष्ट-. — ( L. 58 ) $D_7$ उच्यते ( for इष्यते ). — ( L. 59 ) $T_2$ $G_1$ आश्रयं ( for अश्राव्य ). $G_3$ जगतीपतिः. — ( L. 60 ) $D_7$ तं ( for वा ). — ( L. 63 ) $T_2$ $G_1$ बलिनां ( for बन्धनान् ). $M_{1.3}$ यं च. — ( L. 64 ) $T_2$ $G_1$ राजन्वधम् ( for पराजयम् ). — ( L. 66 ) $D_7$ $T_1$ $G_{3.4}$ अपाश्रित्य. $G_1$ साधु यस्त्व-; M साधु यो वा ( $M_2$ यश्च ). — ( L. 69 ) M पुण्य- ( for पिण्ड- ). — ( L. 72 ) $D_7$ शौर्यं ( for चौर्यं ). — ( L. 73 ) $G_3$ तत्त्वदार्शिनः; M पातकादिह. — ( L. 75 ) $D_7$ मित्रद्रोहेन; $G_1$ °द्रोहेण. — ( L. 77 ) $G_1$ M [अ]स्य ( for [आ]शु ). — ( L. 78 ) $G_1$ $M_2$ वर्षेषु ( for वर्णेषु ). $G_3$ [अ]यं ( for यो ). — ( L. 79 ) $D_7$ कृतांगं; $G_{1.2}$ $M_2$ कृतांतं. — ( L. 80 ) $T_2$ $G_{1.2}$ $M_2$ सहस्रो. $G_1$ $M_2$ देहानिष्क्रिया; $G_2$ °निष्क्रियः. — ( L. 81 ) $D_7$ $T_2$ $G_1$ M अपि ( for एव ). $M_{1.3}$ [उ]शना. — ( L. 82 ) $T_1$ गोपाते च; $G_{3.4}$ गोपतेश्च. — ( L. 83 ) $T_2$ विप्राणां ( for प्राणान्तं ). — ( L. 84 ) $T_2$ $G_{1.2}$ $M_2$ महाभागः. $M_{1.3}$ om. च. — ( L. 85 ) $D_7$ पापकर्मैव; $T_2$ पापमेवेह. — ( L. 86 ) $D_7$ $T_1$ $M_{1.3}$ उच्यते ( for इष्यते ). — ( L. 88 ) $G_{2-4}$ $M_{1.3.4}$ द्यूत-. $M_{2.4}$ इयां ( for तदा ). — ( L. 89 ) $T_2$ तदा ( also as above ). — ( L. 90 ) $D_7$ तावद्-; $T_2$ $G_1$ M तव ( for भवद्- ). — ( L. 92 ) $D_7$ त्वद्दग्धं च; $T_2$ न दग्धं च; $G_1$ $M_2$ न दंडं च; $G_{2.4}$ तु दंडं च; $G_3$ [ए]व दंडं तत्; $M_{1.3.4}$ [अ]नुदग्धं च.

साहमेवंविधं दुःखं संप्राप्ता तव हेतुना।
आदित्यस्य प्रसादेन न च प्राणैर्वियोजिता।
रक्षिता देवदेवेन जगतः कालहेतुना। [ 95 ]
दिवाकरेण देवेन विवस्त्रा न कृता तदा।

4

After adhy. 12. 26, N ( except $D_7$ ) ins.:

अस्मिन्नेव प्रकरणे धनंजयमुदारधीः।
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः।
यदेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति।
न स्वर्गो न सुखं न श्रीर्निर्धनस्येति तन्मृषा।
स्वाध्याययज्ञसंसिद्धा दृश्यन्ते बहवो जनाः। [ 5 ]
तपोरताश्च मुनयो येषां लोकाः सनातनाः।
ऋषीणां समयं शश्वद्ये रक्षन्ति धनंजय।
आश्रिताः सर्वधर्मज्ञास्तान्देवा ब्राह्मणान्विदुः।
स्वाध्यायनिष्ठांश्च मुनीञ्ज्ञाननिष्ठांस्तथापरान्।
बुध्येथाः संततं चापि कर्मनिष्ठान्धनंजय। [ 10 ]
ज्ञाननिष्ठेषु कार्याणि प्रतिष्ठाप्यानि पाण्डव।
वैखानसानां वचनं यथा नो विदितं पुरा।
अजाश्च पृश्नयश्चैव सिकताश्चैव भारत।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः।
अवाप्यैतानि कर्माणि वेदोक्तानि धनंजय। [ 15 ]
दानमध्ययनं यज्ञो निग्रहश्चैव दुर्ग्रहः।
दक्षिणेन च पन्थानमर्यम्णो ये दिवं गताः।
एतान्क्रियावतां लोकानुक्तवान्पूर्वमप्यहम्।
उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि।
एते त्यागवतां लोका भान्ति पार्थ सनातनाः। [ 20 ]
तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुराविदः।
संतोषात्स्वर्गगमनं संतोषः परमं सुखम्।
तुष्टेर्न किंचित्परतः सा सम्यक्प्रतितिष्ठति।
विनीतक्रोधहर्षस्य सततं सिद्धिरुत्तमा।
अत्राप्युदाहरन्तीमा गाथा गीता ययातिना। [ 25 ]
यास्मिः प्रत्याहरेत्कामान्कूर्मोऽङ्गानीव सर्वशः।
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति।

---

— $G_3$ om. ( hapl. ) lines 94–95. — ( L. 94 ) M प्रसादाच्च. — $M_{1.3}$ om. ( hapl. ) the post. half of line 95 and the prior half of line 96.

4

$D_3$ om. the ref. — ( L. 1 ) $\acute{S}_1$ K $V_1$ $D_1$ तस्मिन् ( for अस्मिन् ). $K_2$ $D_{2.3}$ एवं ( for एव ). $K_2$ $Da_2$ $D_{2.3}$ प्रकारेण ( for प्रकरणे ). — ( L. 2 ) $\acute{S}_1$ युधिष्ठिरं. — Before line 3, $B_2$ $Da_2$ ins. युधिष्ठिर उवाच. — ( L. 3 ) $K_3$ $D_4$ ऋते ( for इति ). — ( L. 4 ) Dn नार्थो ( for न श्रीर् ). $B_1$ [अ]पि ( for [इ]ति ). — ( L. 5 ) $D_{2.3.5}$ स्वाध्यायधर्मसंपन्ना ( for the prior half ). $D_1$ मुच्यंते ( for दृश्यन्ते ). — ( L. 6 ) $\acute{S}_1$ $K_{1.2}$ $D_1$ तपोवंतश्च. — ( L. 7 ) $K_5$ अपीताः (sic) ( for ऋषीणां ). Da समयः. $\acute{S}_1$ $K_{2.3}$ यद्वद्; $B_2$ Da सम्यग् ( for शश्वद् ). — ( L. 8 ) $D_4$ damaged. $D_1$ प्रश्रिताः; $D_3$ आश्रितात् ( for आश्रिताः ). $K_5$ $B_5$ Dn देवास्तान् ( by transp. ). $K_4$ $D_1$ ब्राह्मणा ( for °णान् ). — $D_4$ om. line 9. — ( L. 9 ) $K_{3.5}$ $Dn_1$ $D_4$ हि ऋषीन् ( for च मुनीञ् ). $V_1$ B Da $Dn_2$ $D_{2.5.6.8}$ स्वाध्यायनिष्ठा मुनयो ( $B_2$ Da ऋषयो ) ( for the prior half ). $V_1$ B Da $Dn_2$ $D_{3.5.6}$ ज्ञाननिष्ठास्तथापरे ( for the post. half ). — ( L. 10 ) $V_1$ B $Da_2$ सततं ( for संततं ). $K_5$ $B_{0-2.4.5}$ $D_{2.4.8}$ धर्मनिष्ठान्; $D_6$ कर्मनिष्ठा ( for °निष्ठान् ). Da धनंजयः. — ( L. 11 ) $\acute{S}_1$ $K_{1.2.4}$ B Da $D_{1-6.8}$ क( $\acute{S}_1$ $K_{1.2}$ $B_1$ का )न्यानि ( for कार्याणि ). $B_2$ Da भारत ( for पाण्डव ). — ( L. 12 ) $K_{3.5}$ $V_1$ $B_{0.1.3-5}$ Dn $D_{2-6.8}$ प्रभो; $B_2$ Da तथा ( for पुरा ). — ( L. 13 ) $K_2$ प्रजाश् ( for अ° ). $K_4$ सिकताश्; $K_5$ वृष्णयश्; $B_2$ $D_6$ पृष्ण°; $B_5$ प्रश्न° ( for पृश्न° ). Da अश्वजापृश्नया( $Da_2$ °श्नमा )-श्चैव (sic) ( for the prior half ). — ( L. 14 ) $V_1$ केतकाश्; Da केशवश् ( for केतवश् ). $\acute{S}_1$ $K_{1.4.5}$ $D_1$ चापि ( for चैव ). — ( L. 15 ) $V_1$ कार्यानि ( for कर्माणि ). $\acute{S}_1$ $K_{1.4}$ $D_1$ यथोक्तानि ( for वेदोक्तानि ). — $\acute{S}_1$ $K_1$ $D_1$ om. line 16. — ( L. 16 ) $K_3$ जज्ञं; $D_4$ यज्ञं ( for यज्ञो ). $K_3$ Da $D_4$ निग्रहं. $K_{3-5}$ $V_1$ B Da $D_{2-6.8}$ दुष्करः ( $K_3$ $D_4$ °रं ) ( for दुर्ग्रहः ). — ( L. 17 ) $K_2$ Dn तु ( for च ). $D_4$ अर्यम्णा. $\acute{S}_1$ $K_{1.2.4}$ $V_1$ $D_1$ परं ( for दिवं ). — ( L. 18 ) $K_3$ Da $D_4$ एते ( for एतान् ). $D_4$ लोका ( for लोकान् ). $K_4$ अर्थवान् ( for उक्त° ). $B_1$ अव्ययं ( for अप्यहम् ). — ( L. 19 ) $\acute{S}_1$ $K_{1.4}$ $D_1$ आश्रित्यैव; $B_1$ नियमार्थं; Da विषमाद्यं ( for नियमाद्यं ). $K_4$ प्रपद्यसि; $B_0$ प्रशंसति; Da $Dn_2$ $D_{3.6}$ प्रपश्यति; $D_4$ प्रशंश्यति ( for प्रपश्यसि ). — ( L. 20 ) $K_{2.5}$ $B_4$ $Dn_2$ $D_{1.3}$ यागवतां; $V_1$ $B_{0.1.3}$ (marg.) योगवतां; $B_3$ क्रिया°; Da [ऽ]भ्यास° ( for त्याग° ). Da संति ( for भान्ति ). — ( L. 22 ) $D_5$ संतोषः. Dn स्वर्गमाप्नोति. — ( L. 23 ) $K_{1.4}$ तुष्टेन्न; $K_2$ तुष्येन्न; $V_1$ $B_{0.1.3-5}$ तुष्टया न; Da तुष्टा न; $D_1$ तुष्टिं न; $D_{4.8}$ तुष्टेन ( for तुष्टेर्न ). $K_5$ Dn परमं; $D_4$ परतरं ( hypermetric ) ( for परतः ). $\acute{S}_1$ $K_{1.4}$ $D_1$ यस्य ( for सम्यक् ). — ( L. 24 ) $V_1$ $B_{0.1.3-5}$ $Dn_2$ $D_6$ क्रोधहर्षविनीतस्य; $B_2$ Da हर्षक्रोधविनीतस्य ( for the prior half ). $B_1$ सिद्धिसत्तम; $D_8$ बुद्धिरुत्तमा ( for सिद्धि° ).

यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ।
यदा न भावं कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा । [ 30 ]
विनीतमानमोहस्य बहुसङ्गविवर्जिनः ।
तदात्मज्योतिषः साधोर्निर्वाणमुपपद्यते ।
इदं तु श्रृणु मे पार्थ ब्रुवतः संयतेन्द्रियः ।
धर्ममन्ये वृत्तमन्ये धनमीहन्ति चापरे ।
धनहेतोर्य ईहेत तस्यानीहा गरीयसी । [ 35 ]
भूयान्दोषो हि वित्तेषु यश्च धर्मस्तदाश्रयः ।
प्रत्यक्षमनुपश्यामस्त्वमपि द्रष्टुमर्हसि ।
वर्जनं वर्जनीयानामीहमानेन दुष्करम् ।
ये वित्तमभिपद्यन्ते सम्यक्तेषु सुदुर्लभम् ।
द्रुह्यतः प्रैति तत्प्राहुः प्रतिकूलं यथातथम् । [ 40 ]
यस्तु संभिन्नवृत्तः स्याद्वीतशोकभयो नरः ।
अल्पेन तृषितो द्रुह्यन्भ्रूणहत्यां न बुध्यते ।
दुष्यन्त्याददतो भृत्या नित्यं दस्युभयादिव ।
दुर्लभं च धनं प्राप्य भृशं दत्त्वानुतप्यते ।
अधनः कस्य किं वाच्यो विमुक्तः सर्वतः सुखी । [ 45 ]
देवस्वमुपगृह्यैव धनेन न सुखी भवेत् ।
अत्र गाथां यज्ञगीतां कीर्तयन्ति पुराविदः ।
त्रयीमुपाश्रितां लोके यज्ञसंस्तरकारिकाम् ।
यज्ञाय सृष्टानि धनानि धात्रा
यज्ञाय सृष्टः पुरुषो रक्षिता च । [ 50 ]
तस्मात्सर्वं यज्ञ एवोपयोज्यं

---

— ( L. 25 ) K$_{1-3.5}$ B$_1$ Dn D$_{1-6.8}$ [इ]मां ( for [इ]मा ). K$_{1-3.5}$ B$_1$ Dn$_1$ D$_{2-4.6.8}$ गाथां गीतां ययातिना ( K$_1$ °नां ) ( for the post. half ). — ( L. 26 ) Da यानि ( for याभिः ). Ś$_1$ K$_{1.4}$ D$_1$ प्रत्याहरत्. K$_{3.5}$ D$_4$ योभिप्रेत्याहरेत्कामान् ( for the prior half ). B$_5$ कूर्मवत् ( for सर्वशः ). Bo सर्वांगानीव कूर्मवत्; Da सर्वशोंगानि कूर्मवत् ( for the post. half ). — With lines 27–30, cf. B. 12. 326. 33–34. — ( L. 27 ) K$_2$ Da$_1$ बिभ्येति ( for बिभेति ). D$_1$ न बिभेति यदा यं च ( for the prior half ). — ( L. 28 ) Da नेच्छसि; D$_1$ नैच्छति ( for नेच्छति ). — ( L. 29 ) V$_1$ B$_2$ Da D$_{3.5}$ भावं न ( by transp. ); D$_8$ भावं तु. Ś$_1$ K$_{1.4}$ D$_{1.4}$ transp. भावं and कुरुते. B$_2$ D$_8$ पावकं ( for पापकम् ). — ( L. 31 ) K$_{1.3.5}$ Dn D$_{1.4.6}$ -मोहश्च ( for °स्य ). K$_2$ विनीतमोहमानस्य; B$_2$ मानमोहविनीता स्युर्; Da मानमोहविनीतस्य ( for the prior half ). K V$_1$ Da Dn D$_{1.2.4.6.8}$ -विवर्जितः ( for °नः ). — ( L. 32 ) K$_4$ V$_1$ B Da D$_{2.3.5.6}$ तथात्म- ( for तदात्म- ). K V$_1$ B Da Dn D$_{2.3.5.6.8}$ साधो ( for साधोर् ). — ( L. 33 ) B$_2$ Da च ( for तु ). K$_3$ श्रृणुमः ( for श्रृणु मे ). K$_3$ D$_4$ संयतेंद्रियान्. — D$_8$ om. lines 34–35. — ( L. 34 ) V$_1$ Bo.$_{2-5}$ D$_1$ तु मन्यंते ( for वृत्तमन्ये ). Ś$_1$ K$_{1.4.5}$ इच्छंति; Da ईहति ( for ईहन्ति ). — ( L. 35 ) K$_4$ D$_{3.5}$ यद् ( for य ). B$_2$ Da ईहते धनहेतोर्यस्; D$_{1.4}$ धने हेतोर्य ईहेतां ( for the prior half ). — ( L. 36 ) D$_{4.6}$ भूयाद्‌ ( for भूयान् ). D$_{2.3.5}$ [s]स्ति; D$_4$ च ( for हि ). K$_5$ B$_{1.3-5}$ Dn D$_{2.3.5.8}$ वित्तस्य; Bo संवित्तस्य ( hypermetric ); D$_6$ चित्तस्य ( for वित्तेषु ). D$_3$ यथाश्रया ( for तदाश्रयः ). — ( L. 37 ) K$_5$ अनुपश्याम; B$_2$ Da °मि ( for °मस् ). — ( L. 38 ) Da वर्जयीनानाम्; D$_6$ °मानानाम्. — ( L. 39 ) D$_8$ चित्तम् ( for वित्तम् ). D$_{2.3.5.8}$ अनुपश्यंते; D$_4$ अभिपद्यंत ( for °पद्यन्ते ). K$_{2.3.5}$ B$_1$ Dn$_1$ D$_4$ सम्यक्त्वं तेषु दुर्लभम् ( for the post. half ).

— Ś$_1$ K$_{1.2}$ D$_1$ om. lines 40–42. — ( L. 40 ) K$_4$ द्रुह्यते; B$_1$ द्रुह्यतां; Dn$_2$ द्रुह्यतत्; D$_{2.3.6}$ द्रुह्यति ( for °तः ). K$_{3.5}$ प्रति; D$_4$ प्रेति ( for प्रैति ). D$_4$ यथा तथा. — ( L. 41 ) K$_{3.5}$ यदि ( for यस्तु ). K$_{3.5}$ [अ]संपन्न-; D$_6$ [अ]यं भिन्न-; D$_8$ संनिभ- ( for संभिन्न- ). — ( L. 42 ) Da स्वल्पेन. Da ह्रस्वन्; Dn$_2$ द्रुह्याद् ( for द्रुह्यन् ). V$_1$ भ्रूणहत्या. — ( L. 43 ) K$_3$ D$_{2-5}$ दुःखानि; B$_1$ दृश्यंति; B$_{3.5}$ ( marg. ) ईर्ष्यंति; D$_6$ द्रुह्यंति ( for दुष्यन्ति ). Ś$_1$ K$_{1.2}$ V$_1$ B$_4$ Da अददतो; Dn D$_8$ ददतो; D$_1$ [आ]ददते ( for [आ]ददतो ). K$_4$ दुष्यान्न ददतो भृत्यान् ( for the prior half ). Da$_1$ नित्य- ( for °त्यं ). Ś$_1$ K D$_{1.4}$ -भयं ( K$_3$ °ये ) तथा; Da -भयात्ततः ( for °दिव ). — ( L. 44 ) D$_2$ om. from दुर्लभं up to गाथां ( in line 47 ). B$_1$ मत्वा; D$_6$ हत्वा ( for दत्त्वा ). Ś$_1$ K$_{1.2.4}$ च तप्यते; D$_6$ न तप्यते ( for [अ]नुतप्यते ). — ( L. 45 ) Ś$_1$ K$_{1.4}$ D$_1$ केन ( for कस्य ). V$_1$ -चिद्‌ ( for किं ). K$_2$ Dn$_1$ D$_2$ सर्वशः; K$_3$ D$_4$ संगतः ( for सर्वतः ). — ( L. 46 ) Ś$_1$ K$_1$ उरगम्; D$_1$ द्विजिह्वम्; D$_4$ देवस्यम् ( for °स्वम् ). K$_1$ V$_1$ B$_4$ D$_{1.3.5}$ न धनेन ( by transp. ); D$_6$ स धनेन; D$_8$ अनेन न. Ś$_1$ K ( except K$_2$ ) Da D$_{1.4}$ सदा ( for भवेत् ). — ( L. 47 ) K$_1$ अथ; K$_3$ B$_5$ Dn$_1$ D$_{2.6}$ तत्र ( for अत्र ). Da अत्र गाथा यज्ञगीता ( for the prior half ). Da कथयंति. D$_4$ पुरातन. — ( L. 48 ) K$_2$ V$_1$ Bo.$_{3.5}$ Da D$_{2.3.5.6}$ अपा( D$_6$ °या )श्रिते; Dn अपा( Dn$_2$ °या )श्रितां; D$_1$ सयाःस्थिता ( sic ); D$_4$ उपाश्रिता ( for °श्रितां ). Ś$_1$ K$_{1.4}$ त्रयीमयाः स्थिता लोके ( for the prior half ). K$_{3.5}$ D$_4$ -संस्तव- ( K$_5$ °र )कारिणीं; Da -संभवकारिते; D$_6$ -संसारकारिका. — D$_8$ om. lines 49–52. — ( L. 49 ) D$_1$ दृष्टो निधनानि; D$_2$ corrupt. — ( L. 50 ) Ś$_1$ K$_{1-3}$ D$_{1.4}$ यज्ञा( K$_3$ D$_4$ °था )दिष्टः ( for यज्ञाय सृष्टः ). B$_1$ पूरुषो. D$_4$ न; D$_6$ वा ( for च ). Ś$_1$ K$_{1.2.4}$ D$_1$ रक्षकं ( for रक्षिता ).

धनं न कामाय हितं प्रशस्तम् ।
एतस्यार्थे च कौन्तेय धनं धनवतां वर ।
धाता ददाति मर्त्येभ्यो यज्ञार्थमिति विद्धि तत् ।
तस्माद्बुध्यन्ति पुरुषा न हि तत्कस्यचिद्ध्रुवम् । [ 55 ]
श्रद्दधानस्ततो लोके दद्याचैव यजेत च ।
लब्धस्य त्यागमेवाहुर्न भोगं न च संक्षयम् ।
तस्य किं संचयेनार्थः कार्ये ज्यायसि तिष्ठति ।
ये स्वधर्मादपेतेभ्यः प्रयच्छन्त्यल्पबुद्धयः ।
शतं वर्षाणि ते प्रेत्य पुरीषं भुञ्जते जनाः । [ 60 ]
अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद्दानधर्मोऽपि दुष्करः ।
लब्धानां द्रव्यजातानां बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ।

## 5

After 12. 40. 22, T2 ins. :

श्रीमहाभारताख्यानं वाञ्छितार्थफलप्रदम् ।
आयुष्यं पुष्टिजननं पुत्रपौत्राभिवृद्धिदम् ।
सर्वसौभाग्यदं पुंसां सर्वाघौघनिवारणम् ।
श्रीमतो वासुदेवस्य नित्यभक्त्येकसाधकम् ।
शिवस्य वासुदेवस्य देवदेवस्य चोभयोः । [ 5 ]
माहात्म्येन विशुद्धेन सर्वतः समलंकृतम् ।
राजर्षीणां पुण्यकृतां मुनीनां च महात्मनाम् ।
माहात्म्यं च महापुण्यं युद्धानां चैव कौशलम् ।
क्षेत्राणां चैव तीर्थानां नदीनां च प्रकीर्तनम् ।
महाभारतमाख्यानमितिहासं महाफलम् । [ 10 ]
आरभ्य शंतनोर्जन्म पाण्डवानां महात्मनाम् ।
राज्याभिषेकपर्यन्तं प्रयतः सुसमाहितः ।
श्रुणुयादर्थसिद्ध्यर्थं सर्वान्कामानवाप्नुयात् ।
अभिषेचनिकाध्यायं श्रुत्वा नित्यं समाहितः ।
पयसा सर्पिषा चैव भक्ष्यभोज्यान्नसंचयैः । [ 15 ]
भोजयेद्ब्राह्मणान्मुख्याञ्श्रेयसः साधनं हि तत् ।
महाभारतवक्तारं व्यासबुद्ध्या प्रपूजयेत् ।
वस्त्रालंकारगन्धाद्यैरुपचारैः समाहितः ।

## 6

D7 ins. after 76* following 12. 47. 30 : T1 G1. 2 ( which ins. 76*-77* ) after 77* : T2 after 12. 47. 54 :

अव्यक्तं बुद्ध्यहंकारो मनो बुद्धीन्द्रियाणि च ।
तन्मात्राणि विशेषाश्च तस्मै तत्त्वात्मने नमः ।
भूतं भव्यं भविष्यच्च भूतादिप्रभवाप्ययः ।
योऽग्रजः सर्वभूतानां तस्मै भूतात्मने नमः ।
यस्य यज्ञे वराहस्य विष्णोरमिततेजसः । [ 5 ]
प्रणामं ये प्रकुर्वन्ति तेषामपि नमो नमः ।
यं हि सूक्ष्मं विचिन्वन्ति परं सूक्ष्मविदो जनाः ।
सूक्ष्मासूक्ष्मं च यद्ब्रह्म तस्मै सूक्ष्मात्मने नमः ।

---

—( L. 52 ) Dn2 धनाय ( for धनं न ). D4 वामाय ( for का° ). Ś1 K1. 2. 4. 5 Dn2 D1. 4 हि तत्; D8 धनं ( for हितं ). Da1 प्रशस्ते. —( L. 53 ) K3 D4 एतदर्थं; K5 Dn D5 एतत्स्वार्थे ( for एतस्यार्थे ). K2. 4 हि ( for च ). Ś1 K1. 4 D1 वरं; Da1 वरः ( for वर ). —( L. 54 ) Ś1 K1. 2. 4 D1 दाता ( for धाता ). B3 m. 4 दधाति ( for ददाति ). K1 मंत्रेभ्यो. — K3 om. lines 55-56. —( L. 55 ) Ś1 K1. 4 D1 वृध्यंति; D4 रुध्यंति ( for बु° ). Ś1 K1. 4 Da D1. 4 च ( for हि ). —( L. 56 ) K2 B1-5 D3. 5. 6. 8 लोको ( for °के ). V1 न जायते; D6. 8 यजेति च ( for यजेत च ). —( L. 57 ) K5 D2-5. 8 इत्याहुर् ( for एवा° ). K2 B4 Dn1 संचयं ( for संक्षयम् ). K3 D4 न च भोगं न संचयं ( for the post. half ). —( L. 58 ) B2 Da तत्र; Dn2 यस्य ( for तस्य ). Ś1 K Bo. 3 m. 5 D1. 4 कः; Da यः ( for किं ). B3 ( marg. ) [अ]थ ( for [अ]र्थः ). D2 om. from कार्ये up to यद्ददाति ( in line 61 ). D6 तिष्ठसि. —( L. 59 ) K5 च; D1 स- ( for स्व- ). D4 अपेताभ्यः ( for °तेभ्यः ). B2 अपात्रेभ्यः स्वधर्मेभ्यः ( for the prior half ). —( L. 60 ) Da तत्प्रेत्य ( for ते प्रेत्य ). B1 Da नराः ( for जनाः ). —( L. 62 ) Bo हि ( for ऽपि ). —( L. 63 ) K2. 4 B5 लु( K2 ल )- ब्धानां द्रव्यम( K3 °स )त्तानां; K3. 5 Dn D4. 5 लब्धानामपि वित्तानां; V1 लब्धानां हि द्रव्यवतां ( for the prior half ). K2. 4 द्वावपि क्रमात्. —( L. 64 ) D2 अपात्र- ( for °त्रे ). B3 गात्रे ( for पात्रे ). Bo प्रतिपादनं; B2 [अ]प्रतिपालनं.

## 5

[ App. No. 5, printed here for convenience, is the same as 59*. ]

## 6

D7 T2 read lines 1-6 after line 42, followed by 77* (cf. v. l. 30). —( L. 1 ) D7 अव्यक्त- ( for अव्यक्तं ). T2 बुद्धयहंकारौ. —( L. 3 ) G2 भविष्यं ( for °ष्यच् ). D7 T2 भूतानां ( for °दि- ). T2 -प्रभवाव्ययः ( for °प्ययः ). — Lines 5-6 = 96*. T1 G1. 2 om. lines 5-6. D7 T2 read lines 7-8 after

मत्स्यो भूत्वा विरिञ्चाय येन वेदाः समाहृताः ।
रसातलगताः शीघ्रं तस्मै मत्स्यात्मने नमः । [ 10 ]
मन्दराद्रिर्धृतो येन प्राप्ते ह्यमृतमन्थने ।
अतिकर्कशदेहाय तस्मै कूर्मात्मने नमः ।
वाराहं रूपमास्थाय महीं सवनपर्वताम् ।
उद्धरत्येकदंष्ट्रेण तस्मै क्रोडात्मने नमः ।
नारसिंहवपुः कृत्वा सर्वलोकभयंकरम् । [ 15 ]
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः ।
पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रनखैर्युतम् ।
दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ।
वामनं रूपमास्थाय बलिं संयम्य मायया ।
त्रैलोक्यं क्रान्तवान्यस्तु तस्मै क्रान्तात्मने नमः । [ 20 ]
जमदग्निसुतो भूत्वा रामः शस्त्रभृतां वरः ।
महीं निःक्षत्रियां चक्रे तस्मै रामात्मने नमः ।
त्रिःसप्तकृत्वो यश्चैको धर्मव्युत्क्रान्तिगौरवात् ।
जघान क्षत्रियान्संघे तस्मै क्रोधात्मने नमः ।
रामो दाशरथिर्भूत्वा पुलस्त्यकुलनन्दनम् । [ 25 ]
जघान रावणं संख्ये तस्मै क्षत्रात्मने नमः ।
यो हली मुसली श्रीमान्नीलाम्बरधरः स्थितः ।
रामाय रौहिणेयाय तस्मै भोगात्मने नमः ।
शङ्खिने चक्रिणे नित्यं शार्ङ्गिणे पीतवाससे ।
वनमालाधरायैव तस्मै कृष्णात्मने नमः । [ 30 ]
वसुदेवसुतः श्रीमान्क्रीडितो नन्दगोकुले ।
कंसस्य निधनार्थाय तस्मै क्रीडात्मने नमः ।
वसुदेवत्वमागम्य यदोर्वंशसमुद्भवः ।
भूभारहरणं चक्रे तस्मै कृष्णात्मने नमः ।
सारथ्यमर्जुनस्याजौ कुर्वन्गीतामृतं ददौ । [ 35 ]
लोकत्रयोपकाराय तस्मै ब्रह्मात्मने नमः ।
दानवांस्तु वशे कृत्वा पुनर्बुद्धत्वमागतः ।
सर्गस्य रक्षणार्थाय तस्मै शुद्धात्मने नमः ।
हनिष्यति कलौ प्राप्ते म्लेच्छांस्तुरगवाहनः ।
धर्मसंस्थापको यस्तु तस्मै कल्क्यात्मने नमः । [ 40 ]
क्षत्रियाणां सहस्राणि प्रयुतान्यर्बुदानि च ।
योऽवधीद्भारते युद्धे तस्मै क्रीडात्मने नमः ।
तारान्वये कालनेमिं हत्वा दानवपुंगवम् ।
ददौ राज्यं महेन्द्राय तस्मै मुख्यात्मने नमः ।
यः सर्वप्राणिनां देहे साक्षीभूतो व्यवस्थितः । [ 45 ]
अक्षरक्षरमाणानां तस्मै साक्ष्यात्मने नमः ।
नमोऽस्तु ते महादेव नमस्ते भक्तवत्सल ।
सुब्रह्मण्य नमस्तेऽस्तु प्रसीद परमेश्वर ।
अव्यक्तव्यक्तरूपेण व्याप्तं सर्वं त्वया विभो ।
नारायणं सहस्राक्षं सर्वलोकमहेश्वरम् । [ 50 ]
हिरण्यनाभं यज्ञाङ्गममृतं विश्वतोमुखम् ।
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो देवेशो मङ्गलायतनं हरिः ।
मङ्गलं भगवान्विष्णुर्मङ्गलं मधुसूदनः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः । [ 55 ]

## 7

After 12. 47. 47, D2.6 ins.:

सुतले तलमध्यस्थो हत्वा तु मधुकैटभौ ।

---

84*. —( L. 7 ) T2 लक्ष्यविदो. —( L. 9 ) T2 देवाः ( for वेदाः ). —( L. 10 ) T2 शीघ्रास्. D7 T2 ( also as above ) मोहात्मने ( for मत्स्या° ). —( L. 11 ) T2 मंदरस्तु ( for °राद्रिर् ). D7 प्राप्तो. G1 -मंथरे ( for °ने ). —( L. 13 ) D7 T1 G1 वराह- ( G1 °हं ); G2 वरांगं ( for वाराहं ). —( L. 14 ) D7 T2 उद्धार. D7 कालात्मने ( for क्रोडा° ). —( L. 15 ) D7 T2 -क्षयंकरं ( for -भयं° ). —Lines 17–18 = lines 3–4 of 80*. —( L. 17 ) D7 सिंहेक्षण- ( for पिङ्गे° ). G2 -सदं ( for -सटं ). T2 G2 दंष्ट्रा-; G1 दृष्ट्वा ( for दंष्ट्र- ). —( L. 18 ) T1 ( *sup. lin.* also as above ) -हरणं ( for -क° ). —G2 om. ( hapl. ) lines 21–22. —( L. 22 ) D7 T2 क्रोधात्मने ( for रामा° ). —Lines 23–24 = lines 7–8 of 79*. D7 T2 om. lines 23–24. ( L. 23 ) T1 -गौरवान् ( for °वात् ). —( L. 24 ) T1 संख्ये ( for संघे ). —( L. 25 ) T2 पौलस्त्य-. —( L. 26 ) T1 G1 संघे; G2 संखे ( for संख्ये ). —( L. 27 ) D7 भूत्वा ( for श्रीमान् ). D7 T2 प्रभुः ( for स्थितः ). —D7 T2 om. ( hapl. ) lines 31–36. G2 om. ( hapl. ) lines 33–34. —( L. 33 ) T1 वासुदेवत्वम् ( for वसु° ). —( L. 35 ) T1 [आ]दौ ( for [आ]जौ ). —( L. 36 ) G2 कृष्णात्मने ( for ब्रह्मा° ). —D7 reads lines 37–38, followed by 76*, after 12. 47. 53; T2 after 88* ( for both, cf. pp. 194–195. —( L. 38 ) T1 बुद्धात्मने; G2 अध्या° ( for शुद्धा° ). —D7 T2 read lines 39–42, followed by 77*, and lines 1–6 after line 44. —( L. 39 ) D7 T2 वधिष्यति ( for हनि° ). —T1 G1.2 om. ( hapl. ) lines 41–42. —( L. 43 ) D7 T2 तारामये. —( L. 44 ) D7 T2 transp. ददौ and राज्यं. T1 G2 सां( G2 सं )ख्यात्मने; T2 ख्याता° ( for मुख्या° ). —D7 T G2 om. ( hapl. ) lines 45–46. D7 reads lines 47–55 after 12. 47. 54. Lines 50–51 = 94*. D7 repeats and T2 reads lines 50–51 ( followed by 96* in T2 ) after 92* ( cf. v. l. 12. 47. 60 ). T2 om. lines 52–55. —( L. 53 ) D7 भगवान् ( for देवेशो ).

उद्धृता येन वै वेदास्तस्मै मत्स्यात्मने नमः ।
ससागरनगां बिभ्रत्सप्तद्वीपां वसुंधराम् ।
यो धारयति पृष्ठेन तस्मै कूर्मात्मने नमः ।
एकार्णवे महीं मग्नां वाराहं रूपमास्थितः । [ 5 ]
उद्दधार महीं योऽसौ तस्मै क्रोडात्मने नमः ।
नारसिंहं ततः कृत्वा यस्त्रैलोक्यभयंकरम् ।
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः ।
वामनं रूपमास्थाय बलिं संयम्य मायया ।
इमे क्रान्तास्त्रयो लोकास्तस्मै क्रान्तात्मने नमः । [ 10 ]
जमदग्निसुतो भूत्वा रामः परशुधृक्प्रभुः ।
सहस्रार्जुनहन्ता यस्तस्मा उग्रात्मने नमः ।
रामो दाशरथिर्भूत्वा पौलस्त्यकुलनन्दनम् ।
जघान रावणं संख्ये तस्मै क्षत्रात्मने नमः ।
वसुदेवसुतः श्रीमान्वासुदेवो जगत्पतिः । [ 15 ]
जहार वसुधाभारं तस्मै कृष्णात्मने नमः ।
बुद्धरूपं समास्थाय सर्वधर्मपरायणः ।
मोहयन्सर्वभूतानि तस्मै मोहात्मने नमः ।
हनिष्यति कलेरन्ते म्लेच्छांस्तुरगवाहनः ।
धर्मसंस्थापनार्थाय तस्मै कालात्मने नमः । [ 20 ]
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ।

8

After 12. 74. $2^{ab}$, $D_7$ S ins.:

तेषामर्थश्च कामश्च धर्मश्चेति विनिश्चयः ।
श्लोकांश्चोशनसा गीतांस्तान्निबोध युधिष्ठिर ।
उच्छिष्टः स भवेद्राजा यस्य नास्ति पुरोहितः ।
रक्षसामसुराणां च पिशाचोरगपक्षिणाम् ।
शत्रूणां च भवेद्वध्यो यस्य नास्ति पुरोहितः । [ 5 ]
ब्रह्मत्वं सर्वयज्ञेषु कुर्वीताथर्वणो द्विजः ।
राज्ञश्चाथर्ववेदेन सर्वकर्माणि कारयेत् ।
ब्रूयाद्गर्ह्याणि सततं महोत्पातान्यघानि च ।
इष्टमङ्गल्युक्तानि तथान्तःपुरकाणि च ।
गीतनृत्ताधिकारेषु संमतेषु महीपतेः । [ 10 ]
कर्तव्यं करणीयानि वैश्वदेवबली तथा ।
पक्षसंधिषु कुर्वीत महाशान्तिं पुरोहितः ।
रौद्रहोमसहस्रं च स्वस्य राज्ञः प्रियं हितम् ।
राज्ञः पापमलाः सप्त यान्नृच्छति पुरोहितः ।
अमात्याश्च कुकर्माणो मन्त्रिणश्चाप्युपेक्षकाः । [ 15 ]
चौर्यमव्यवहारं च व्यवहारोपसेविनाम् ।
अदण्ड्यदण्डनं चैव दण्ड्यानां चाप्यदण्डनम् ।
हिंसा चान्यत्र संग्रामाद्यज्ञाच्च मल उच्यते ।
कुभृत्यैस्तु प्रजानाशः सप्तमस्तु महामलः ।
रौद्रैर्होमैर्महाशान्त्या घृतकम्बलकर्मणा । [ 20 ]
भृग्वङ्गिरो विधिज्ञो वै पुरोधा निर्णुदेन्मलान् ।
एतान्हित्वा दिवं याति राजा सह महामलान् ।
सामात्यः सपुरोधाश्च प्रजानां पालने रतः ।
एतस्मिन्नेव कौरव्य पौरोहित्ये महामते ।
श्लोकानाह सुरेन्द्रस्य गुरुर्देवो बृहस्पतिः । [ 25 ]

---

7

(L. 7) $D_6$ वपुः (for ततः). — (L. 11) $D_2$ -सूतो (for -सुतो). — (L. 15) $D_6$ वासुदेव- (for वसु°). — Line 21 = 12. 47. $47^{cd}$.

8

$M_{1.3.4}$ om line 1. — (L. 1) $T_2$ $G_1$ $M_2$ transp. कामश्च and धर्मश्च. $M_2$ [ए]व (for [इ]ति). $M_2$ सुनिश्चितः (for विनिश्चयः). — (L. 2) $M_1$ गीतास्. — (L. 4) $M_2$ -रक्षसां (for -पक्षिणाम्). — (L. 6) $G_4$ सर्वमंत्रेषु (for °यज्ञेषु). $D_7$ सर्वयज्ञेषु ब्रह्मत्वं (for the prior half). — (L. 7) $T_2$ $M_{1.3.4}$ राज्ञां (for राज्ञश्). $G_{1.2}$ [अ]थर्ववेदेषु (for °वेदेन). — (L. 8) $T_2$ $G_1$ M भूयो (for ब्रूयाद्). $T_2$ $G_1$ $M_2$ ग्राह्याणि; $G_2$ कार्याणि (for गर्ह्याणि). $M_{1-3}$ महोत्पातानघानि च; $M_4$ °ह्ययानि च (for the post. half). — (L. 9) $D_7$ T $G_{2-4}$ इष्टमंगळ- (for °मङ्गल-). $D_7$ $T_1$ $G_{3.4}$ [अं]तःपुरिकाणि (for °पुरकाणि). — (L. 10) $T_2$ $G_1$ $M_{2.4}$ महीपते (for °पतेः). — (L. 11) $T_2$ $G_1$ कर्तव्य- (for कर्तव्यं). $T_2$ $G_1$ -करणीयादि; $M_2$ करणीयं च (for °यानि). $T_2$ $G_{1.2}$ $M_2$ -बलिस्; $M_{1.3.4}$ -बलिं (for -बली). $M_2$ यथा (for तथा). — (L. 13) $G_1$ राष्ट्र-; $M_{1.3.4}$ रौद्रं (for रौद्र-). $M_4$ तु (for च). $M_2$ राज्ञा (for राज्ञः). M प्रजाहितं ($M_2$ °तः) (for प्रियं हितम्). — (L. 14) $G_3$ यानि (for यान्). $G_{1.2}$ $M_2$ ऋच्छंति; $G_3$ [इ]च्छति (for ऋच्छति). — (L. 15) $M_4$ त्रिकर्माणो (for कु°). — (L. 16) $T_2$ $G_2$ शौर्यम् (for चौर्यम्). $D_7$ $T_1$ $G_{2-4}$ अव्यवहारश्च (for °रं च). $M_{1.3}$ व्यवहाराप- (for °रोप-). $T_2$ M -सेवनं; $G_1$ -सेवने (for -सेविनाम्). — (L. 17) $G_1$ अदंड्यान्दंडयंश्चैव. — (L. 19) M च (for तु). $M_4$ सप्तमं (for °मस्). $D_7$ T G महाबलः (for °मलः). — (L. 20) $T_2$ कृतकंबल-; $M_4$ घृतकंबळ-. — (L. 21) $G_1$ निर्णिते; $G_2$ $M_4$ निर्नुदेन्; $M_2$ निमदेन् (for निर्णुदेन्). — (L. 22) $M_4$ यांति. S (except $T_1$ $G_4$ $M_1$) महाबलान् (for °मलान्). — (L. 25) $D_7$ $T_1$ $G_{2-4}$ महेंद्रस्य (for सुरेन्द्रस्य). — (L. 26) $D_7$ महीपाल

तान्निबोध महाभाग महीपालहिताञ्शुभान् ।
ऋग्वेदे सामवेदे च यजुर्वेदे च वाजिनाम् ।
न निर्दिष्टानि कर्माणि त्रिषु स्थानेषु भूभृताम् ।
शान्तिकं पौष्टिकं चैव अनिष्टानां च शातनम् ।
शशास्ते याज्ञवल्क्येन यज्ञानां हितमीहता । [ 30 ]
ब्रह्मिष्ठानां वरिष्ठेन ब्रह्मणः संमते विभोः ।
बह्वृचं सामगं चैव वाजिनं च विवर्जयेत् ।
बह्वृचो राष्ट्रनाशाय राजनाशाय सामगः ।
अध्वर्युर्बलनाशाय प्रोक्तो वाजसनेयकः ।
अब्राह्मणेषु वर्णेषु मन्त्रान्वाजसनेयकान् । [ 35 ]
शान्तिके पौष्टिके चैव नित्यं कर्मणि वर्जयेत् ।
ब्राह्मणस्य महीपस्य सर्वथा न विरोधिनः ।
वेदाश्चत्वार इत्येते ब्राह्मणा ये च तद्विदुः ।
पौरोहित्ये प्रमाणं तु ब्राह्मणश्च महीपते ।
जात्या न क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः । [ 40 ]
चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः ।
भार्गवाङ्गिरसैर्मन्त्रैस्तेषां कर्म विधीयते ।
वैतानं कर्म यच्चैव गृह्यकर्म च यत्स्मृतम् ।
द्विजातीनां त्रयाणां तु सर्वकर्म विधीयते ।
राजधर्मप्रवृत्तानां हितार्थं त्रीणि कारयेत् । [ 45 ]
शान्तिकं पौष्टिकं चैव तथाभिचरणं च यत् ।
अग्निष्टोममुखैर्यज्ञैर्दूषिता भूपकर्मभिः ।
न सम्यक्फलमिच्छन्ति ये यजन्ति द्विजातयः ।
पौरोहित्यं हि कुर्वाणा नाशं यास्यन्ति भूभृताम् ।
यज्ञकर्माणि कुर्वाणा ऋत्विजस्तु विरोधिनः । [ 50 ]
ब्रह्मक्षत्रविशः सर्वे पौरोहित्ये विवर्जिताः ।
तदभावे च पारक्यं निर्दिष्टं राजकर्मसु ।
ऋषिणा याज्ञवल्क्येन तत्तथा न तदन्यथा ।
भार्गवाङ्गिरसां वेदे कृतविद्यः षडङ्गवित् ।
यज्ञकर्मविधिज्ञश्च विधिज्ञः पौष्टिकेषु च । [ 55 ]
अष्टादशविकल्पानां विधिज्ञः शान्तिकर्मणाम् ।
सर्वरोगविहीनश्च संयतः संयतेन्द्रियः ।
श्वित्रकुष्ठक्षयक्षीणैर्ग्रहापस्मारदूषितैः ।
अशस्तैर्वातदुष्टैश्च दूरस्थैः संवदेन्नृपः ।
रोगिणं त्वृत्विजं चैव वर्जयेच्च पुरोहितम् । [ 60 ]
न चान्यस्य कृतं येन पौरोहित्यं कदाचन ।
यस्य याज्यो मृतश्चैव भ्रष्टः प्रव्रजितोऽथ वा ।
युद्धे पराजितश्चैव सर्वांस्तान्वर्जयेन्नृपः ।
नक्षत्रस्यानुकूल्येन यः संजातो नरेश्वरः ।
राजशास्त्रविनीतश्च श्रेयान्प्राज्ञः पुरोहितः । [ 65 ]
अधन्यानां निमित्तानामुत्पातानामथार्थवित् ।
शत्रुपक्षक्षयज्ञश्च श्रेयान्प्राज्ञः पुरोहितः ।
वाजिनं तदभावे च चरकाध्वर्यवानथ ।
बह्वृचं सामगं चैव नीतिशास्त्रकृतश्रमान् ।

---

( for महाभाग ). $D_{7}$ महाभागहिताञ्; $G_{1}$ महीपालथिताञ्; $M_{4}$ °युताञ्. — ( L. 27 ) $T_{2}$ $G_{1}$ $M_{1.2}$ ऋग्वेद- ( for °वेदे ). — ( L. 29 ) $T_{2}$ $G_{1}$ $M_{1-3}$ नाशनं; $M_{4}$ शासनं ( for शातनम् ). — ( L. 30 ) $D_{7}$ सप्त; $G_{1}$ तप्तास् ( for शशास् ). $G_{2}$ च ( for ते ). $D_{7}$ M य( $D_{7}$ या )ज्ञवल्के( $M_{2}$ °ल्क्ये )न. $T_{2}$ $G_{1}$ प्रजानां ( for यज्ञानां ). $T_{2}$ $G_{2}$ $M_{2.4}$ इच्छता ( for ईहता ). —( L. 31 ) $T_{2}$ ब्रह्मणा. $M_{4}$ संमतो ( for °ते ). $G_{1.2}$ M विभो ( for विभोः ). — ( L. 32 ) $M_{1.3}$ सामनं ( for °गं ). — $G_{3}$ om. ( hapl. ) lines 33–36. — ( L. 33 ) $M_{4}$ राज्य- ( for राष्ट्र- ). $M_{4}$ राजा ( for राज- ). — ( L. 34 ) $T_{2}$ $G_{1}$ प्रोक्ता वाजसनेयकाः ( for the post. half ). —( L. 35 ) $T_{2}$ मंत्रेषु ( for वर्णेषु ). $D_{7}$ $T_{1}$ $G_{2.4}$ वाजसनेयिकान्; $M_{4}$ °यगान्. — ( L. 36 ) $G_{1.2}$ पुष्टिके ( for पौष्टिके ). $T_{2}$ $G_{1}$ कर्माणि ( for कर्मणि ). — ( L. 37 ) $M_{4}$ सर्वस्थान- ( for सर्वथा न ). — ( L. 38 ) M तद्विदः ( for °दुः ). — ( L. 39 ) $T_{2}$ $G_{1.2}$ $M_{2}$ ब्राह्मणाश्च; $M_{1.3.4}$ ब्राह्मणस्य. $D_{7}$ $M_{1.3.4}$ महीपतेः ( for °पस्य ). — ( L. 40 ) $G_{1}$ $M_{1-3}$ हि; $M_{4}$ नि- ( *inf. lin.* ह ) ( for न ). — ( L. 41 ) $T_{2}$ M चा( $M_{1.3}$ च )तुर्वर्ण्य-. M चेह ( for एव ). — ( L. 43 ) M वर्ज( $M_{2}$ °र्त )येच् ( for कर्म यच् ).

M गर्ह्य ( for गृह्य- ). — ( L. 45 ) $T_{2}$ राजकर्म-; M °शब्द ( for °धर्म- ). M त्रीणि कर्माणि कारयेत् ( for the post. half ). — ( L. 47 ) $G_{3}$ पापकर्मभिः ( for भूप° ). — ( L. 48 ) $T_{2}$ बलम् ( for फलम् ). $M_{3.4}$ ऋच्छंति ( for इच्छन्ति ). — ( L. 49 ) $G_{2}$ तु ( for हि ). — ( L. 50 ) $D_{7}$ $G_{1}$ यज्ञकर्मणि. $T_{2}$ $G_{2}$ M [अ]विरोधिनः ( for विरो° ). — ( L. 51 ) $T_{2}$ M ब्रह्मक्षत्रविशां. $G_{1}$ M पौरोहित्य-. — ( L. 52 ) $G_{1.2}$ $M_{2}$ पारक्यौ; $M_{3}$ चारक्यं. — ( L. 53 ) M यज्ञवल्के( $M_{2}$ °ल्क्ये )न. — ( L. 54 ) M भार्गवांगिरसे. $T_{2}$ तथा विद्वान् ( for कृतविद्यः ). — ( L. 56 ) $M_{2}$ त्रिधिज्ञाः. — ( L. 57 ) $T_{2}$ $G_{1}$ सर्वतः; $M_{1.3}$ संयुतः ( for संयतः ). $G_{2}$ त्वं यतेंद्रियः. — ( L. 58 ) $G_{1}$ $M_{2}$ चित्र-; $G_{4}$ श्वित्री-; $M_{1}$ श्वित्रि-; $M_{3.4}$ श्रित्र- ( for श्वित्र- ). $G_{4}$ -कुष्ठी- ( for -कुष्ठ- ). — ( L. 59 ) $T_{2}$ दूरस्थः. $G_{1.2}$ नृप. —( L. 60 ) $M_{2}$ रोगिण[म्] ( for °णं ). $T_{2}$ $G_{1}$ $M_{2}$ om. तु. $M_{2}$ [ऋ]त्विजां ( for °जं ). — $G_{2}$ om. ( hapl. ) from post. half of line 60 up to the prior half of line 63. — ( L. 62 ) $M_{2.4}$ यज्ञो ( for याज्यो ). $D_{7}$ $T_{2}$ $G_{1}$ यथा ( for ऽथ वा ). — ( L. 64 ) $T_{2}$ $G_{1}$ यस्तु जातो; M यस्मिञ्जातो. — ( L. 66 ) $T_{2}$ अधान्यानां; $G_{1}$

कृतिनोऽथर्वणे वेदे स्थापयेत्तु पुरोहितान् । [70]
हिंसालिङ्गा हि निर्दिष्टा मन्त्रा वैतानिकैर्द्विजैः ।
न तानुच्चारयेत्प्राज्ञः क्षात्रधर्मविरोधिनः ।
प्रजागुणः पुरोधाश्च पुरोहितगुणाः प्रजाः ।

## 9

After 12. 77. 5, D7 S ins. :

म्लेच्छदेशास्तु ये केचित्पापैरध्युषिता नरैः ।
गत्वा तु ब्राह्मणस्तांश्च चण्डालः प्रेत्य चेह च ।
व्रात्यान्म्लेच्छांश्च शूद्रांश्च याजयित्वा द्विजाधमः ।
अकीर्तिमिह संप्राप्य नरकं प्रतिपद्यते ।
महावृन्दसमुद्राभ्यां पर्यायेणैकविंशतिम् । [5]
ब्राह्मणो ऋग्यजुःसाम्नां मूढः कृत्वा तु विप्लवम् ।
कल्पमेकं कृमिः सोऽथ नानाविष्ठासु जायते ।
व्रात्ये म्लेच्छे तथा शूद्रे तस्करे पतितेऽशुचौ ।
कुदेशे च सुरापे च ब्रह्मघ्ने वृषलीपतौ ।
अनधीतिषु सर्वत्र भुञ्जाने यत्र तत्र वा । [10]
बालस्त्रीवृद्धहन्तुश्च मातापित्रोर्गुरोस्तथा ।
मित्रद्रुहि कृतघ्ने च गोघ्ने चैव कथंचन ।
पुत्रघातिनि शत्रौ च न मन्त्रान्योजयेद्द्विजः ।
स तेषां विप्लवः प्रोक्तो मन्त्रविद्भिः सनातनैः ।
यदि विप्रो विदेशस्थस्तीर्थयात्रां गतोऽथ वा । [15]
यदि भीतः प्रपन्नो वा कुदेशं शौचवर्जितम् ।
सुसंयतः शुचिर्भूत्वा मन्त्रानुच्चारयेद्द्विजः ।
आर्तश्चोच्चारयेन्मन्त्रमार्तत्राणपरोऽथ वा ।
हीनेष्वपि प्रयुञ्जानो नासौ विप्लावकः स्मृतः ।
क्रूरकर्मा सुकर्मा वा कर्मभिर्वञ्चितोऽथ वा । [20]
तत्त्ववित्तरते पापं शीलवान्संयतेन्द्रियः ।

## 10

After 12. 95. 4, D7 S ins. :

दण्डो हि बलवान्यत्र तत्र साम प्रयुज्यते ।
प्रदानं सामपूर्वं च भेदमूलं प्रशस्यते ।
त्रयाणां विफलं कर्म यदा पश्येत भूमिपः ।
रन्ध्रं ज्ञात्वा ततो दण्डं प्रयुञ्जीताविचारयन् ।
अभिभूतो यदा शत्रुः शत्रुभिर्बलवत्तरैः । [5
उपेक्षा तत्र कर्तव्या वध्यतां बलिनां बलम् ।
दुर्बलो हि महीपालो यदा भवति भारत ।
उपेक्षा तत्र कर्तव्या चतुर्णामविरोधिनी ।
उपायः पञ्चमः सोऽपि सर्वेषां बलवत्तरः ।

---

अथान्यानां. — (L. 67) T2 G1. 2 राज- (for राज्ञः). — (L. 68) M2 वाजिना. T2 G1 चकारध्वर्यवान्; M3 राज्ञोक्ता°; M4 चरकाध्वर्यु°. — (L. 69) G3 नीतिश्रीशास्त्रकृत- (hypermetric). M1. 3. 4 -श्रमं (for -श्रमान्). — (L. 70) M1–3 कृती( M2 °ति )नाथर्वणे. T2 G1 M स्थापयेत. — (L. 71) T2 G1. 2 M2 हिंसालिंगादि- (for °लिङ्गा हि). M वैतानिका. — G3 om. lines 72–73. — (L. 72) G1 अचरयेत्; M1. 3 उच्चरयेत्. M1. 3 -धर्माविरोधिनः. — (L. 73) D7 G4 प्रजागुणाः.

9

(L. 1) M2 केचित्तु (for ये केचित्). — (L. 2) M1. 3 ब्राह्मणांस्(for °णस्). T2 G1 तु (for च). M4 चंडालाः. T2 चैव हि (for चेह च). — (L. 3) G1 व्रत्यान् (for व्रात्यान्). G1 द्विजाधमं (for °धमः). — (L. 5) T2 M महादुःखसमुद्राख्यं (for the prior half). — (L. 6) G2 त्वृग्यजुः-; M1. 3 बृग्यजुः-; M4 [ऽ]थर्वजुः-. — (L. 7) T2 G1 एवं (for एकं). T2 G1. 2 M2 कृमिस्थोथ (for कृमिः सोऽथ). — (L. 8) D7 वृत्त्या (for व्रात्ये). M2 शूद्रो (for म्लेच्छे). M1. 3. 4 व्राले शूद्रे तथा म्लेच्छे (for the prior half). — (L. 9) G1. 2 वृषलीपतौ. — (L. 10) G1 अनधीतेषु; M °ध्यायेषु (for °धीतिषु). D7 G1. 2 M2 भुंजानो (for °ने). G2 यत्र (for तत्र). — (L. 11) G1 तथैव च (also as above) (for गुरोस्तथा). — (L. 12) M न च गोघ्ने (for गोघ्ने चैव). — (L. 13) D7 G3. 4 न मंत्राद्यानयेद्द्विजः (for the post. half). — After line 13, T2 G1 read lines 18–19. — (L. 14) T2 G1 M2 मंत्रकृद्भिः; M1. 3. 4 °द्गिभिः. — (L. 15) G2 M1–3 तीर्थयात्रा-. G1 M2 यथा; G4 [ऽ]पि वा (for ऽथ वा). — (L. 16) G4 प्रमत्तो (for प्रपन्नो). T2 G1 अप्रमत्तः प्रमत्तो वा कुदेशः शौचवर्जितः. — (L. 17) T1 सुसंयुक्तः. T1 ततः (for द्विजः). — T2 G1 read lines 18–19 after line 13. — (L. 18) M2 -परीप्सया (for -परोऽथ वा). — (L. 19) G2 विप्लवकः. — (L. 20) D7 T1 G2–4 विकर्मा; M2 [अ]प्यकर्मा (for (for सु°). G1 सा (for वा). G2 र्व्यजितो; M1. 3. 4 वर्जितो (for वञ्चितो). — (L. 21) M1. 3 तरतो (for तरते).

10

(L. 1) G2 [ऽ]ति-; M1. 3. 4 [ऽ]पि (for हि). M1. 3. 4 बहुलो (for बलवान्). — (L. 2) G2 M दंडमूलं (for भेद°). — (L. 3) M1–3 यत्र; M4 तत्र (for यदा). T2 पश्यति (for पश्येत). — (L. 4) M1. 3 [अ]विचारय (for °यन्). — (L. 5) M4 om. यदा. — G1 M om. (hapl.) lines 6–7. — (L. 9) M3 उपायं. — (L.

भार्गवेण च गीतानां श्लोकानां कौसलाधिप । [ 10 ]
विज्ञाय तत्त्वं तत्त्वज्ञ तत्त्वतस्तत्करिष्यसि ।
यदि रक्षः पिशाचेन हन्यते यत्र कुत्रचित् ।
उपेक्षा तत्र कर्तव्या बध्यतां बलिनां बलिः ।
दुर्बलो हि महीपालः शत्रूणां शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् । [ 15 ]
शठानां सचिवानां च म्लेच्छानां च महीपते ।
एष उक्त उपायानामुपेक्षा बलवत्तमा ।
अश्मना नाशयेल्लोहं लोहेनाश्मानमेव च ।
बिल्वानीवापरैर्बिल्वैर्म्लेच्छान्म्लेच्छैः प्रसादयेत् ।
दासानां च प्रद्वसानामेतदेवेह कारयेत् । [ 20 ]
चण्डालम्लेच्छजातीनां दण्डेन च निवारणम् ।
शठानां दुर्विनीतैश्च पूर्वमुक्तं समाचरेत् ।
अन्याः शठाश्च सचिवास्तथा कुब्राह्मणादयः ।
उपायैः पञ्चभिः साध्याश्चतुर्वर्गविरोधिनः ।

11

$D_7$ ins. after 232* following 12. 99. 10 : S after 12. 99. 11 :

ऐश्वर्यमीदृशं प्राप्तः सर्वदेवैः सुदुर्लभम् ।
शक्र उवाच ।
यदनेन कृतं कर्म प्रत्यक्षं ते महीपते ।
पुरा पालयतः सम्यक्पृथिवीं धर्मतो नृप ।
शत्रवो निर्जिताः सर्वे ये तवाहितकारिणः ।
संधमो विधमश्चैव सुधमश्च महाबलः । [ 5 ]
राक्षसा दुर्जया लोके त्रयस्ते युद्धदुर्मदाः ।
पुत्रास्ते शतशृङ्गस्य राक्षसस्य महीपतेः ।
अथ तस्मिञ्शुभे काले तव यज्ञं वितन्वतः ।
अश्वमेधं महायागं देवानां हितकाम्यया ।
तस्य ते खलु विघ्नार्थमागता राक्षसास्त्रयः । [ 10 ]
कोटीशतपरीवारां राक्षसानां महाचमूम् ।
परिगृह्य ततः सर्वाः प्रजा बन्दीकृतास्तव ।
विह्वलाश्च प्रजाः सर्वाः सर्वे च तव सैनिकाः ।
निराकृतस्त्वया चासीत्सुदेवः सैन्यनायकः ।
तत्रामात्यवचः श्रुत्वा निरस्तः सर्वकर्मसु । [ 15 ]
श्रुत्वा तेषां वचो भूयः सोपधं वसुधाधिप ।
सर्वसैन्यसमायुक्तः सुदेवः प्रेरितस्त्वया ।
राक्षसानां वधार्थाय दुर्जयानां नराधिप ।
नाजित्वा राक्षसीं सेनां पुनरागमनं तव ।
बन्दीमोक्षमकृत्वा च न चागमनमिष्यते । [ 20 ]
सुदेवस्तद्वचः श्रुत्वा प्रस्थानमकरोन्नृप ।
संप्राप्तश्च स तं देशं यत्र बन्दीकृताः प्रजाः ।
पश्यति स्म महाघोरां राक्षसानां महाचमूम् ।
दृष्ट्वा संचिन्तयामास सुदेवो वाहिनीपतिः ।
नेयं शक्या चमूर्जेतुमपि सेन्द्रैः सुरासुरैः । [ 25 ]
नाम्बरीषः कलामेकामेषां क्षपयितुं क्षमः ।
दिव्यास्त्रबलभूयिष्ठः किमहं पुनरीदृशः ।

---

10 ) $T_1$ कोसलाधिप ; $T_2$ वसुधा° ; M केकया° ( for कौसला° ). — ( L. 11 ) $M_{1.3}$ तत्त्व- ( for तत्त्वं ). $G_1$ तत्त्वं तत् ( for तत्त्वतस् ). $D_7$ करिष्यति. — ( L. 13 ) $G_1$ वाच्यतां ( for वध्यतां ). $G_2$ बलिना ; $G_3$ $M_{1.3.4}$ कलिना ; $M_2$ कलिनां ( for बलिनां ). $T_1$ $G_3$ M कलिः ; $G_1$ बलः ( for बलिः ). — ( L. 14 ) $T_2$ $G_1$ $M_1$ [ऽ]पि ( for हि ). $G_1$ $M_1$ मही-पाल. $T_2$ $G_2$ $M_{2-4}$ शत्रुणा ( for शत्रूणां ). — ( L. 16 ) $T_2$ चैव भूपते ( for च मही° ). — ( L. 17 ) $M_4$ युक्त ( for उक्त ). M बलवत्तरः ( $M_2$ °रा ). — ( L. 18 ) $D_7$ $G_{2-4}$ साधयेल् ( for नाश° ). $M_1$ लोहेण. $M_2$ तु ( for च ). — ( L. 19 ) $D_7$ $G_1$ बिल्वानिव ( for °नीव ). M करे ( for [अ]परैर् ). $T_2$ परानिचैर् ( for [अ]परैर्बिल्वैर् ). $G_1$ M प्रसाधयेत् ( for प्रसाद° ). $T_2$ विल्वैर्म्लेच्छान्प्रसाधयेत् ( for the post. half ). — ( L. 20 ) $M_4$ प्रवृष्टानाम् ( for °सानाम् ). — ( L. 21 ) $T_2$ $G_{1.2}$ $M_2$ चंडाळ-. $D_7$ -जातानां ( for -जातीनां ). — ( L. 23 ) T $G_{1.2}$ M अंत्याः ( for अन्याः ). — ( L. 24 ) $G_2$ साध्यैश् ( for साध्याश् ). $M_4$ धतुर्वंश- ( for °वर्ग- ).

11

( L. 3 ) $T_2$ $G_{1.2}$ $M_{2.4}$ पालयते ( for पालयतः ). $T_2$ससमुद्रां महीमिमां ; $M_{1-3}$ महीं तव नरोत्तम ( for the post. half ). — ( L. 5 ) $D_7$ $T_1$ $G_{3.4}$ संयमो ; $T_2$ संधर्मो ; $G_1$ सधर्मो ( for संधमो ). $D_7$ वियमश् ; $G_2$ विघमश् ; $M_1$ विधिमश् ( for विधमश् ). $D_7$ सुयमश् ; $T_2$ $G_1$ सुधर्मश्च ; $M_{1.3.4}$ धमश्चैव ; $M_2$ धर्मश्चैव ( for सुधमश्च ). — ( L. 8 ) $D_7$ $G_1$ $M_2$ तथा ( for अथ ). $G_{1.2}$ धर्मं ( for यज्ञं ). — ( L. 9 ) $M_{1.3.4}$ -यज्ञं ( for -यागं ). $T_2$ अश्वमेधमहायोगं ( for the prior half ). — ( L. 12 ) $M_{1-3}$ सर्वान्. $M_3$ वंतीकृतास् ( for बन्दी° ). — ( L. 14 ) $G_1$ निराकृतास्. $T_2$ $G_{1.2}$ तु या ; $M_1$ तया ( for त्वया ). — ( L. 16 ) $D_7$ $G_2$ सोपधा ; $T_1$ °थं ( for °धं ). — ( L. 17 ) $M_4$ सुदेव-. T $G_1$ M प्रहितस् ( for प्रेरितस् ). — ( L. 20 ) $M_{1.3.4}$ वंदि-मोक्षम् ( for बन्दी° ). $G_1$ तव ; $M_{1.3.4}$ नात्र ( for न च ). — ( L. 21 ) $M_3$ नृपः. — ( L. 22 ) $M_4$ संप्राप्य ( for संप्राप्तश् ). $M_{1.3.4}$ वंदीकृताः. — ( L. 23 ) $T_2$ पश्यंति. — ( L. 25 ) $M_1$ चमू ; $M_2$ महीं ( for चमूर् ). — ( L.

ततः सेनां पुनः सर्वां प्रेषयामास पार्थिव ।
यत्र त्वं सहितः सर्वैर्मन्त्रिभिः सोपधैर्नृप ।
ततो रुद्रं महादेवं प्रपन्नो जगतः पतिम् । [ 30 ]
श्मशाननिलयं देवं तुष्टाव वृषभध्वजम् ।
स्तुत्वा शस्त्रं समादाय स्वशिरश्छेत्तुमुद्यतः ।
कारुण्याद्देवदेवेन गृहीतस्तस्य दक्षिणः ।
स पाणिः सह शस्त्रेण दृष्ट्वा चेदमुवाच ह ।
किमिदं साहसं पुत्र कर्तुकामो वदस्व मे । [ 35 ]
स उवाच महादेवं शिरसा त्ववनीं गतः ।
भगवन्वाहिनीमेनां राक्षसानां सुरेश्वर ।
अशक्तोऽहं रणे जेतुं तस्मात्त्यक्ष्यामि जीवितम् ।
गतिर्भव महादेव ममार्तस्य जगत्पते ।
नागन्तव्यमजित्वा च मामाह जगतीपतिः । [ 40 ]
अम्बरीषो महादेव क्षारितः सचिवैः सह ।
तमुवाच महादेवः सुदेवं पतितं क्षितौ ।
अधोमुखं महात्मानं सत्त्वानां हितकाम्यया ।
धनुर्वेदं समाहूय सगणं सहविग्रहम् ।
रथनागाश्वकलिलं दिव्यास्त्रसमलंकृतम् । [ 45 ]
रथं च सुमहाभागं येन तत्रिपुरं हतम् ।
धनुः पिनाकं खड्गं च रौद्रमस्त्रं च शंकरः ।
निजघानासुरान्सर्वान्येन देवस्त्रियम्बकः ।
उवाच च महादेवः सुदेवं वाहिनीपतिम् ।
रथादस्मात्सुदेव त्वं दुर्जयस्तु सुरासुरैः । [ 50 ]
मायया मोहितो भूमौ न पदं कर्तुमर्हसि ।
अत्रस्थस्त्रिदशान्सर्वाञ्जेष्यसे सर्वदानवान् ।
राक्षसाश्च पिशाचाश्च न शक्ता द्रष्टुमीदृशम् ।
रथं सूर्यसहस्राभं किमु योद्धुं त्वया सह ।
स जित्वा राक्षसान्सर्वान्कृत्वा बन्दीविमोक्षणम् । [ 55 ]
घातयित्वा च तान्सर्वान्बाहुयुद्धे त्वयं हतः ।
विधमं प्राप्य भूपाल विधमश्च निपातितः ।

## 12

After 12. 118. 6, $D_7$ S ( $G_3$ missing ) ins. :

काकः श्वानोऽकुलीनश्च बिडालः सर्प एव च ।
अकुलीना च या नारी तुल्यास्ते परिकीर्तिताः ।
लोकपालाः सदोद्विग्नाः पश्यन्त्यकुलजान्यथा ।
नारीं वा पुरुषं वाथ शीलं तत्रापि कारणम् ।
दुष्कुलीना च या स्त्री स्याद्दुष्कुलीनश्च यः पुमान् । [ 5 ]
अहिंसाशीलसंयोगाद्धर्माच्च कुलतां व्रजेत् ।
धर्मं प्रति महाराज श्लोकानाह बृहस्पतिः ।
श्रृणु सर्वान्महीपाल हृदि तांश्च करिष्यसि ।
असितं सितकर्माणं यथा दान्तं तपस्विनम् ।

---

26 ) T कळाम्. $M_{1.3}$ एषां ; $M_2$ तेषां ; $M_{1.3.4}$ एकः ( for एषां ). — ( L. 27 ) $M_2$ -संपन्नः ; $M_4$ -भूयिष्ठा ( for -भूयिष्ठः ). $T_2$ किमंग ( for किमहं ). $M_{1.3}$ पुनः किमंग मादृशः ; $M_2$ किं पुनस्त्वंग मादृशः ; $M_4$ किमंग पुनर्मादृशः ( for the post. half ). — ( L. 28 ) $M_4$ ततः सेना पुनः सर्वां ( for the prior half ). $M_4$ प्रैषयामास. T G $M_2$ पार्थिवः. — ( L. 29 ) $T_1$ $G_{1.3.4}$ $M_2$ सहितैः ; $T_2$ मंत्रिभिः ( for सहितः ). $M_4$ सर्वे ( for सर्वैर् ). $T_2$ $G_1$ सोपधैर्मंत्रिभिर् ( by transp. ). $T_1$ नृपः ; $M_{1.3.4}$ वृतः ( for नृप ). — ( L. 30 ) $M_2$ जगतां. $T_2$ पतिः. — ( L. 31 ) $D_7$ $T_1$ G $M_4$ स्मशान-. — After line 31, M ins. :

301* धनुर्वेदोक्तविधिना हुत्वा ध्यात्वा प्रणम्य च ।

— ( L. 33 ) $M_1$ दक्षिणं ( for दक्षिणः ). — ( L. 34 ) $G_1$ पार्णि ; $M_2$ पाणीः. — ( L. 36 ) $G_{1.2}$ M त्ववनिं. — ( L. 37 ) $M_2$ भगवान्. $M_2$ एतां ( for एनां ). — ( L. 38 ) $T_2$ $G_{1.2}$ $M_2$ जीवितुं ( for जीवितम् ). — ( L. 40 ) M [इ]ति ( for च ). — ( L. 41 ) M स्वकैः ( for सह ). — ( L. 44 ) $T_2$ सपरिग्रहं ( for सहवि° ). — $M_4$ om. ( hapl. ) line 45. — ( L. 45 ) $T_2$ $G_1$ बलं ( for रथ- ). — ( L. 46 ) $T_1$ $G_{1.2}$ स ( for सु- ). $T_2$ $G_{1.2}$ M -भोगं ( for भागं ). $M_4$ गतं ( for हतम् ). — ( L. 47 ) $M_{1.3.4}$ व्यादिशत् ; $M_2$ भूमिप ( for शंकरः ). — ( L. 48 ) $G_1$ $M_2$ सुरान् ( for [अ]सु° ). $M_{1.2.4}$ देवस्त्र्यंबकः ( submetric ). $T_2$ $G_1$ येन त्रिपुरवासिनः ( for the post. half ). — ( L. 49 ) $T_2$ $G_1$ ह ( for च ). — ( L. 50 ) $M_2$ सुदेवस्. — ( L. 51 ) M पादं ( for पदं ). — ( L. 52 ) $M_{1.3}$ अत्रस्थ- ( for °स्थस् ). $D_7$ T G जेष्यते ( for °से ). M सह- ( for सर्व- ). — ( L. 54 ) $D_7$ त्वया हतः ; $G_{2.4}$ त्त्रया हताः ; $M_{1.3}$ तमाहवे ; $M_2$ ममाहवे ( for त्वया सह ). $M_4$ किमु यो युद्धमाहवे ( for the post. half ). — ( L. 55 ) $M_2$ विजित्वा ( for स जित्वा ). $T_2$ $G_1$ M बंदि- ( for बन्दी° ). — ( L. 56 ) M तां सेनां ( for तान्सर्वान् ). T $G_{1.2}$ M क्षयं ग( $G_2$ ह )तः ( for त्वयं हतः ). — ( L. 57 ) $D_7$ सधर्मं ; $T_1$ विधर्मः ; $G_2$ विसयं ; $M_4$ विधिमं ; Madras ed. वियमं ( for विधमं ). $D_7$ $G_{1.2}$ वियमश् ; $G_3$ $M_4$ विधमं ( for विधमश् ).

12

( L. 1 ) $D_7$ $T_1$ $G_4$ बिलालः ; $G_1$ M बिलाळः ; $G_2$ बिळाळः ( for बिडालः ). — ( L. 3 ) $M_2$ पश्यति. $M_2$ अकुलजं ( for °जान् ). — ( L. 4 ) $T_1$ $G_2$ $M_3$ नारी. $T_1$ $G_2$ पुरुषो ( for °षं ). — ( L. 5 ) $M_{1-3}$ यदि ; $M_4$ यथा ( for च या ). $G_{2.4}$ च ( for स्याद् ). — ( L. 6 ) $M_3$ -संयोगान्. $T_2$ $G_{1.2}$

वृत्तस्थमपि चण्डालं तं देवा ब्राह्मणं विदुः । [ 10 ]
यदि घातयते कश्चित्पापसत्त्वं प्रजाहिते ।
सर्वसत्त्वहितार्थाय न तेनासौ विहिंसकः ।
द्वीपिनं शरभं सिंहं व्याघ्रं कुञ्जरमेव च ।
महिषं च वराहं च सूकरश्वानपन्नगान् ।
गोब्राह्मणहितार्थाय बालस्त्रीरक्षणाय च । [ 15 ]
वृद्धातुरपरित्राणे यो हिनस्ति स धर्मवित् ।
ब्राह्मणः पापकर्मा च म्लेच्छो वा धार्मिकः शुचिः ।
श्रेयांस्तत्र भवेन्म्लेच्छो ब्राह्मणः पापकृन्न च ।
दुष्कुलीनः कुलीनो वा यः कश्चिच्छीलवान्नरः ।
प्रकृतिं तस्य विज्ञाय स्थिरां वा यदि वास्थिराम् । [ 20 ]
शीलवानुत्तमं कर्म कुर्याद्राजा समाहितः ।
नियुञ्जीत महीपालो दुर्वृत्तं पापकर्मसु ।

## 13

After 12. 122. 25, $D_7$ S ( $G_3$ missing ) ins. :

यथासौ नीयते दण्डः सततं पापकारिषु ।
दण्डस्य नयनात्सा हि दण्डनीतिरिहोच्यते ।
भूयः स भगवान्ध्यात्वा चिरं शूलधरः प्रभुः ।
असृजत्सर्वशास्त्राणि महादेवो महेश्वरः ।
दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः । [ 5 ]
विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पनाः ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु । [ 10 ]
दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ।
एतासामेव विद्यानां व्यासमाह महेश्वरः ।
शतानि त्रीणि शास्त्राणामाह तन्त्राणि सप्ततिम् ।
व्यास एव तु विद्यानां महादेवेन कीर्तितः ।
तन्त्रं पाशुपतं नाम पाञ्चरात्रं च विश्रुतम् । [ 15 ]
योगशास्त्रं च सांख्यं च तन्त्रं लोकायतं तथा ।
तन्त्रं ब्रह्मतुला नाम तर्कविद्या दिवौकसाम् ।
सुखदुःखार्थजिज्ञासा कारकं चेति विश्रुतम् ।
तर्कविद्यास्तथा चाष्टौ स चोक्तो न्यायविस्तरः ।
दश चाष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः । [ 20 ]
पुराणाश्च प्रणीताश्च तावदेव हि संहिताः ।
धर्मशास्त्राणि तद्वच्च एकार्थानीति नान्यथा ।
एकार्थानि पुराणानि वेदाश्चैकार्थसंहिताः ।
नानार्थानि च सर्वाणि तर्कशास्त्राणि शंकरः ।
प्रोवाच भगवान्देवः कालज्ञानानि यानि च । [ 25 ]
चतुःषष्टिप्रमाणानि आयुर्वेदं च सोत्तरम् ।
अष्टादश विकल्पान्तां दण्डनीतिं च शाश्वतीम् ।
गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ।

---

धर्मश्च् ( for धर्मांच् ). $T_2$ $G_{1.2}$ [अ]कुलतां ; $M_{1.3.4}$ गुरुतां ( for कुलतां ). — ( L. 7 ) $T_2$ $G_{1.2}$ $M_2$ महाराजा. — ( L. 8 ) $G_1$ सर्वां ( for सर्वान् ). — ( L. 9 ) $M_2$ तथा. — ( L. 10 ) $M_4$ पिंडालं ( for चण्डालं ). — ( L. 11 ) $M_2$ किंचित्. $G_1$ काकसत्त्वं. $T_2$ $G_1$ प्रजाहितः. — ( L. 12 ) $G_{1.2}$ वालस्त्रीरक्षणाय च ( for the post. half ; cf. line 15 ). — $G_1$ om. lines 13–15. — ( L. 17 ) $G_{1.2}$ ब्राह्मणः ( for धार्मिकः ). $T_2$ M कचित् ( for शुचिः ). — ( L. 18 ) $M_{1.3.4}$ भूयांस् ( for श्रे° ). $D_7$ पापकर्मकृत् ; $T_1$ पापकृत्तमः ( for °कृन्न च ). — ( L. 19 ) M अकुलीनः ( for दुष्कु° ). — ( L. 20 ) $G_1$ तव ( for तस्य ). $M_2$ प्रकृतस्तत्र विज्ञेया ( for the prior half ). $G_1$ $M_2$ स्थिरा. $G_1$ [अ]स्थिरा. — ( L. 21 ) $T_1$ शीलं ( for शील- ). M राज्ञां. — ( L. 22 ) $M_2$ पापकर्मणि.

13

( L. 1 ) $G_1$ यथा ; $G_2$ यदा ( for यया ). — ( L. 2 ) $G_4$ $M_1$ [आ]नयनात् ( for नय° ). — ( L. 4 ) $G_1$ $M_{1.3}$ असृजन्. $M_4$ -शस्त्राणि ( -शा° ). — ( L. 5 ) $G_2$ प्रमाणीकश् ( for °णानि ). — ( L. 6 ) $M_2$ तास्ता ( for तासां ). $M_2$ वेद- ( for भेद- ). $G_2$ -विकल्पना ( for °नाः ). — ( L. 10 ) $G_2$ $M_{1-3}$ अर्थशास्त्र- ( for °शास्त्रं ). $M_{1-3}$ -चतुर्थास्तु ; $M_4$ तु सकलं. — ( L. 11 ) M ह्येता ( for एता ). — ( L. 13 ) $M_2$ अस्त्राणाम् ; $M_4$ शस्त्राणाम् ( for शा° ). $T_2$ $G_1$ महा- ( for आह ). — ( L. 14 ) $G_2$ विद्यां तां ( for विद्यानां ). $G_2$ कीर्तिताः. — ( L. 15 ) $G_1$ M पंचरात्रं. $T_2$ तु ( for च ). — ( L. 16 ) $T_1$ $G_{2.4}$ विख्यातं ( for सांख्यं च ). — ( L. 17 ) $M_2$ मंत्रं ( for तन्त्रं ). $T_1$ ब्रह्मकुला ; $G_{2.4}$ °कुलं ( for °तुला ). — ( L. 18 ) $G_1$ $M_2$ -दुःखार्त- ( for -दुःखार्थ- ). $D_7$ $T_1$ $G_4$ कारकश् ; $T_2$ $G_1$ $M_2$ कारणं ( for कारकं ). — ( L. 19 ) T $G_{1.2.4}$ तर्कविद्यां ( $T_2$ °द्या ) ; $M_2$ कर्मविद्यास् ( for तर्क° ). $D_7$ श्लोको ( for चोक्तो ). $D_7$ $T_1$ $G_4$ नव- ( for न्याय- ). — ( L. 20 ) $D_7$ पौराणां ; $T_1$ $G_1$ पुराणा ( for पौराणा ). $M_3$ -संहितां. — ( L. 21 ) M पुराणस्य ( for °णाश्च ). $M_2$ प्रणीता ( for °ताश् ). $G_2$ च ; $M_{1-3}$ [इ]ह ( for हि ). — ( L. 22 ) $D_7$ तद्वाचः ( for तद्वच्च ). $M_1$ एकार्था नीतिरन्यथा ; $M_2$ °र्थानीक्षितान्यथा. — ( L. 24 ) $D_7$ ततः ( for तर्क- ). — ( L. 25 ) $T_2$ $G_{1.2}$ सर्वशः ( for यानि च ). — ( L. 27 ) $T_2$ $G_1$ -विकल्पानां ; $M_1$ °ल्पांतं ( for °ल्पान्तां ). $T_1$ $G_4$ अष्टांगानि च कल्पांतां ( for the

इत्येताः शंकरप्रोक्ता विद्याः शब्दार्थसंयुता: ।
पुनर्भेदसहस्रं च तासामेव तु विस्तरः । [ 30 ]
ऋषिभिर्देवगन्धर्वैः सविकल्पः सविस्तरः ।
शश्वदभ्यस्यते लोके वेद एव च सर्वशः ।
विद्याश्चतस्रः संक्षिप्ता वेदवादाश्च ते स्मृताः ।
एतासां पारगो यश्च स चोक्तो वेदपारगः ।
वेदानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः । [ 35 ]
शुक्रः स्वायंभुवश्चैव मनुः परमधर्मवित् ।
ब्रह्मा च परमो देवः सदा सर्वैः सुरासुरैः ।
शर्वस्यानुग्रहाच्चैव व्यासो वै वेदपारगः ।
अहं शांतनवो भीष्मः प्रसादान्माधवस्य च ।
शंकरस्य प्रसादाच्च ब्रह्मणश्च कुरूद्वह । [ 40 ]
वेदपारग इत्युक्तो याज्ञवल्क्यश्च सर्वशः ।
कल्पे कल्पे महाभागैर्ऋषिभिस्तत्त्वदर्शिभिः ।
ऋषिपुत्रैर्ऋषीकैश्च भिद्यन्ते मिश्रकैरपि ।
शिवेन ब्रह्मणा चैव विष्णुना च विकल्पितः ।
आदिकल्पे पुनश्चैव भिद्यन्ते साधुभिः पुनः । [ 45 ]
इदानीमपि विद्वद्भिर्भिद्यन्ते च विकल्पकैः ।
पूर्वजन्मानुसारेण बहुधेयं सरस्वती ।

prior half ). — ( L. 28 ) M4 पुराणम् . — ( L. 29 ) D7 -संहिताः ( for -संयुताः ). — ( L. 32 ) M1. 3. 4 शाश्वतः शश्वदुक्तस्तु ( for the prior half ). G2 वेदा. T2 G1 तु; M [इ]ह ( for च ). — ( L. 33 ) T2 G1 वेदाश् ( for विद्याश् ). M1. 3. 4 ता ( for ते ). — ( L. 34 ) D7 एतासां पारयोगश्च ( for the prior half ). D7 उक्तो. D7 -पारगैः ( for °गः ). — D7 om. ( hapl. ) lines 35–38. — ( L. 36 ) T2 G1. 2 M4 शुक्र- ( for शुक्रः ). — ( L. 37 ) M सुरैः प्रभुः ( for सुरासुरैः ). — ( L. 38 ) G1. 2 सर्वस्य ( for शर्वस्य ).. — ( L. 41 ) M1. 3. 4 यज्ञवल्क्यश्. — ( L. 43 ) D7 ऋषिगणैर् ( for ऋषीकैश्च ). D7 भिद्यते श्रमिकैरपि ( for the post. half ). — ( L. 45 ) M1. 3. 4 अधुना ; M2 च पुनः ( for साधुभिः ). — ( L. 46 ) M3. 4 विकल्पिकैः.

